**तद्वेदिना** आयुधज्ञेन ॥ ( २४ ) **भ्रियन्ते** जीवन्ति । **भीमसेनस्यार्थं चेद्** यदि **मन्यते सिद्धं** स्वस्येति शेषः । **वेगाद्** रागरूपात् । तदा **सुयोधनः** सुखयोधन एवायं बुद्धिहीनत्वाद् इत्यन्वयः ॥ ( २६ ) **न नश्येयुः** इति नकारो वितर्के, अपि तु नश्येयुरित्यर्थः ॥ ( २७ ) **यद्** वसु **कौरवैः** कर्तृभूतैः **भूतपूर्वम्** अतीतं गृहीतमिति यावत् । **या वृत्तिः** ग्रामादिरूपा ॥ ( २८ ) **तथैव** तत्संबन्धितया ॥

## २७

( १ ) **विचेष्टा** विविधा चेष्टा । **स्रावो** मूत्रपुरीषादिनिष्यन्दः प्राणनिर्गमनद्वाराणि वा । **अनित्यं** विनाशि । **मा विनीनशः** मा नाशय ॥ ( ३ ) [ **वयसः** ][1] मध्यवयसः । **प्रसार्षीः** प्रसारय ॥ ( ४ ) **प्रणिघ्नन्**[2] तद्दोषभावनया ॥ ( ५ ) **इच्छता**[3] अनिरुन्धता । **बुधः**[4] पण्डितः । **कामे गृध्नो**[5] [ Fol. 10b ]......लत्वात् । ( ६ ) **महाप्रतापः** परिभवहेतुत्वात् ॥ ( ७ ) **परं स्थानं** परलोकम् । **भूयः** पुनर्जन्मान्तरेऽपि । **वर्षपूगम्** अनन्तं कालम् ॥ ( ८ ) **सुखम्** अनुकूलवेदनीयम्, **प्रि[यं]**[6] धनं स्रचादि । **योगः** चित्तवृत्तिनिरोधस्तस्य **अभ्यासे** विषयभूते । यमनियमादि-**धर्मं**[7] **यो न करोति** ॥ ( ९ ) **अश्रद्धा**[8] परलोको नास्तीति धीर्द्वेष उपेक्षा वा ॥ ( १० ) **पूर्वं** करणकाले । **कर्तुः** कर्मणि षष्ठी । **गच्छति** परवशं भवति । कर्तुरिच्छया पुण्यपापयोर्निष्पत्तेः ! **पश्चात्** फलकाले । **अनुयाति** परवशो भवति ॥ ( ११ ) **न्यायोपेतं** विधिसहितम् । **अन्वाहार्येषु** मासिकादिश्राद्धेषु । **तथारूपं** श्रद्धाद्युपेतम् । ( १२ ) **इह क्षेत्रे** कर्मभूमौ । **कार्यं**......॥[9] ( १३ ) **जहाति मृत्युम्** इत्यत्र पूर्ववत् [ नञ् ][10] योजनीयः ॥ (१४) **एवंरूपं** पूर्वग्रन्थव्याख्यातरूपम् । **मात्रावता** मानवता क्षयिणा । **हृदयस्य प्रियेण** विषयेण । [ Fol. 11a ] **स** त्वं क्रोधहर्षलोभजात्कर्मणो **नभः**[11] स्वर्गं **मा [प्र]**[12]**हासीः** ॥ ( १५ ) **अन्तं** विनाशहेतुम् । **कर्मणां** पापकर्मणाम् । अन्तः क इत्याह—**या प्रशंसा** । प्रशंसाकारणं किं तदित्याह[13]—**सत्यम्** इत्यादि । **मा पुनर्गाः** पुनः-शब्दप्रयोगाद् यस्यान्तं गतवानसि तत्पापं कर्म **मा गा** मा गच्छेदित्यर्थः ॥ ( १६ ) **तच्चेत् पापं कर्म देशरूपेण** देशस्थित्या । **नावत्स्यध्वं**[14] वासं नाकरिष्यध्वं **वनेषु** इत्यन्वयः । तत्रार्थान्तरन्यासेन हेतुमाह—**दुःखं वासम्** इति ॥ ( १७ ) **अप्रव्रजन्**[15] वनमगच्छन् ॥ ( १९ ) **व्यनेष्यथा** व्यपनीतवानसि ॥ ( २१ ) **वा**-शब्दाश्चत्वारो यथा-शब्दार्थे । **अप्राज्ञो**[16] यथा, **अधर्मज्ञो** यथा, **प्रज्ञावान्** यथा, **संरम्भाद्** यथेत्यर्थः ॥ ( २२ ) **अद्धा**......॥ ( २४ ) **नु** कष्टम् । **उत** संबुद्धौ ॥ ( २७ ) **अपक्रामेः**[17] अधोगतिं गच्छेः । **संप्रदाय** दत्त्वा । **स्वं** धनम् । **एभ्यः** अमात्येभ्यः । एते भोगभाजनं त्वं तु पापभाजनमिति ॥

---

1 Ms. damaged; lacuna supplied from Arj. 2 Ed. विनिघ्नन् । 3 Ed. एषतः । 4 Ed. बुद्धः । 5 Ed. गृद्धः । 6 Ms. damaged. 7 Ed. कर्म only. 8 Ed. अश्रद्दधत् । 9 Ms. damaged. 10 Supplied from Arj. to complete the sense. 11 Ed. reads differently. 12 Dropped in Ms. 13 Ms. तदितश्रीहा ( corrupt ). 14 Ed. निवसध्वं । 15 Ed. अप्रव्रज्ये 16 Ed. अप्रज्ञो । 17 Ed. अपाक्रमेः ।

२८

[ Fol. 11b ]...( १ ) **यद्यधर्मं यदि धर्मं चरामि,** अस्यार्थः—यद्यधर्मं धर्मं चरामीत्येकोऽन्वयः। यथा वधोऽधर्म एव, दैक्षपश्चिष्टवधौ तु धर्मः। यदि [ धर्मम ][1]धर्मं चरामीत्यपरोऽन्वयः। यथा सत्यं धर्म एव, हिंसकस्य तु हिंसार्थं सत्यमप्यधर्मः। यद्यधर्ममधर्मं चरामीति तृतीयोऽन्वयः। यथा परदारापहरणं शास्त्रतोऽधर्मो लोकेऽपि शिष्टविरुद्धत्वादधर्मः। यदि धर्मं धर्मं चरामीति चतुर्थोऽन्वयः। यथा दानं शास्त्रतो धर्मो लोकेऽपि शिष्टजनश्लाघ्यत्वाद् धर्मः। ( २ ) द्वौ मुख्यौ द्वावमुख्याविति चतुर्धा विभज्य मुख्यौ प्रतिपादयति—**यत्र** इत्यादि। **संप्रपश्यन्ति** लोके वेदसंप्रातिपत्त्या पश्यन्ति ॥ ( ३ ) **एवमेतौ** मुख्याविति शेषः। **आपदि पुनर्लिङ्गमेतत्।** **धर्माधर्मौ वृत्तिनित्यौ भजेताम्,** अयमर्थः—धर्माधर्मौ कर्तारौ ता [ Fol. 12a ]...धर्माधर्मौ कर्मभूतौ भजेताम्। धर्मोऽधर्मभावम् अधर्मश्च धर्मभावं भजेतामित्यन्वयः। **वृत्त्या** प्रवृत्त्या **नित्यौ** द्वावपि मार्गौ...तद् वहत इत्यर्थः। **आद्यं** प्रकृतिरूपम् अविकृतम् **लिङ्गं यस्य तस्य प्रमाणम्,** आद्यमित्यनुवर्तनीयम्। **आद्यं** मुख्यम्। अमुख्यमाह—**आपद्धर्मम्** इति ॥ ( ४ ) **प्रकृतौ लुप्तायां** हीनायां **येन** विकृतिरूपेण **तत्कर्म परीप्सेद्** हि पश्य **हीनः** अमुख्य इत्यर्थः। तयोर्वैपरीत्ये दोषमाह—**प्रकृतिश्च** इति। चकाराद् विकृतिस्थो मुख्यधर्मे वर्तमानः। **उभौ** इति वचनादेतद् गम्यते ॥ ( ५ ) प्रकारान्तरेण आपद्धर्ममाह—**अविलोपम्** इति। कर्मणामिति शेषः। **ब्राह्मणानाम्** इत्यविकार्युपलक्षणम्। यस्मिन् कर्मविच्छेदके कुकर्मणि विहितं **यद्विहितम्।** **सा**[2] इत्यापद्विशेषणम्। तत्कर्मापदित्य [ Fol 12b ] र्थः। **कर्मसु** सत्कर्मसु। **विमार्गस्थान्**[3] विरुद्धकर्मकारिणो **गर्हयेत्** ॥ ( ६ ) यस्मिन्नकर्मणि लुप्ते प्रायश्चित्तमनुकल्पस्तत्कर्म प्रतिपाद[4]......[ **स** ]**त्त्वविच्छेदनाय**[5] **विधीयते सत्सु वृत्तिः सदैव।** इति **सत्त्वानां** ब्राह्मणक्षत्रियविट्शूद्राणां **विच्छेदनाय** क्रियया पृथक्करणाय **विधीयते वृत्तिरसाधारणं** कर्म **सत्सु** अनुष्ठातृषु। शत्रुवधस्यापद्धर्मत्वं ब्राह्मणापेक्षया क्षत्रियापेक्षया तु मुख्यत्वमेवेत्याह—**अब्राह्मणा** इति। **अब्राह्मणाः** क्षत्रियास्तेषां कर्मणां विच्छेदमाह। **वैद्या** वेदाध्यापनेन व्यवहरन्तः। **सर्वोच्छेदं** सर्वशत्रुविनाशम्। **तेभ्यो** हेतुभ्यः साधुभ्यो म[ न्येत ][6], विहितत्वादित्यभिप्रायः। अब्राह्मणाश्च वयम्। ( ७ ) स एव शत्रुवध एवार्थः प्रयोजनं येषां ते **तदर्था** अस्माकं **पितरः**। तत्पूर्वं तत्पूर्वेऽपीत्ययं [ Fol. 13a ] निर्देशः ॥...[7]

३०

[ Fol. 15a ] ( २ ) **शिवं** शुभम् ॥ ( ३ ) **मध्यगतं** मध्यस्थम् ॥ ( ४ ) **आप्तः**

1 Lacuna supplied from Arj. 2 Ed. omits it. 3 Ed. विक्रमस्थान्। 4 For the lacuna, read यन्नाह। 5 Ed. तत्त्वविच्छेदनाय। 6 Lacuna supplied from Arj. 7 The next folios of the Ms. ( Fol. 13a, 13b ), apparently displaced, break off into comment on Adhy. 43·19 f ( see below ), and fol. 14 is missing. The folio 15 resumes Adhy. 30·2, so that the intermediate matter, covering two folios, is lost.

प्रत्ययितः । **दृष्टिमान्** दीर्घदर्शी ॥ ( ५ ) **उपस्तुतिं** मिथ्यास्तुतिम् । **सूक्तां**[1] विलम्बितक्रियाम् ॥ (१०) मन्त्रोपचारमोक्षसंहाराश्चत्वारः पादाः । (११) **गन्धर्वपुत्रोपनिभः**[2] कलाकुशलः ॥ ( १८ ) **निकर्तने** मायायाम् । **छन्नोपधो** गुप्तधर्मादिनिरूपणः ॥ (१९) काम्यत इति **कामः** । **माम् अभि** मां प्रति । **वाङ्**[3] प्रसादोचित [इ]ति शेषः ॥ **येन** क्षणेन येन सह वा ॥ ( ३९ ) **हस्ताजीवा** याचकाः । **जघन्यः**[4] पश्चात् ॥ ( ४१ ) **ब्राह्मणार्थे कृतानि**[5] पूर्वनिष्पादितानि । **भावीनि** भविष्याणि । **वर्तयन्ति** वर्तमानानि। **तान्**[6] ब्राह्मणान् **युक्तरूपान्** विधेरनपेतान् । **तामेव** प्रसिद्धामष्टैश्वर्यादि-**सिद्धिं श्रावयेथाः** । इदं ब्राह्मणेभ्यो वर्तनं ममेति शेषः ॥ ( ४२ ) **आत्मन्येव** विषये पोषणाय **प्रयतन्ते** प्रकृष्टं यत्नमारभन्ते, दुःखेन पोषयन्तीत्यर्थः ॥ ( ४३ ) **अव्ययम्** अहानिं [ Fol. 15b ] धनस्य ॥ ( ४४ ) **आगतान्** पूर्वस्थितान्, **अभ्यागतान्** तत्कालागतान् । भीष्मादेर्दीनपर्यन्तस्य कुशलप्रश्ने व्यवहितत्वात्, दानादिना प्रीणयितुमशक्तत्वाद् वाचापि प्रीणयामीति युधिष्ठिरस्येति भावः ॥ ( ४५ ) **योधका** भीष्मादयः । मम तु धर्म एव योधकः । धर्मस्य विशेषमाह—**नित्यो धर्म** इति । नातिप्रतिबद्ध इत्यर्थः । पुनर्धर्मविशेषणम्—**महाबल** इति ॥ ( ४६ ) **शरीरे** लिङ्गशरीरे चेतसि । **हृदयमिति**—**हृदयम्** आत्मानं दुनोति दुःखीकरोति, अपरिपूर्णत्वात् । कामं दर्शयति—**कुरूनसपत्नान्**[7] शिष्यामीति ॥ ( ४७ ) **युक्तिः** अदृष्टो दृष्टो वा हेतुः । **शक्रपुरम्** इन्द्रप्रस्थम् ॥

## ३१

( १ ) शमस्य कर्तव्यत्वे हेतुमाह—**उत** इत्यादि । **उत** इति पक्षान्तराभिधाने । **सन्तं** सन्मा[ Fol 16a ]र्गगामिनम् ॥ ( २ ) **पुरस्तात्** पूर्वमेव । **शुक्रे**[8] रेतसि शरीरनिमित्ते **उद्** ऊर्ध्वं **चरन्** कारणभावं गच्छन् । बलाबलादिविभागमनादृत्य भगवन्तं सर्वसंहाराय प्रवृत्तमाद्रियस्वेति भावः ॥ ( ३ ) **अलं** निष्प्रयोजनं **विज्ञापनाय** । **यथातथमेव आचक्षीथा अन्योन्यं**[9] प्रति **धृष्णवद्**[10] धृष्टवत् । विज्ञापनादि धृष्टस्येव चरितमिति यावत् ॥ ( १३ ) **अतितिक्षाम** सोढवन्तः ॥ ( १४ ) **अर्धं** राष्ट्रस्य **अवलीढम्**[11] आस्वादितं यन्मत्तः सकाशात् **तत्सर्वं कुरवो विदुः** इत्यन्वयः ॥

## ३२

( ५ ) **कल्यं**[12] नीरोगम् । **अकाल्यः** अनवसरप्रदः । **अशक्तो**[13] वृद्धः ॥ ( ६ ) **शूरैरार्यैश्च** गुप्तम् ॥ ( १० ) **अग्रे** प्रथमं **ते** तत्र **यन्मनोऽभूत्** । मनः-शब्देनात्र मनोविषया गुणा लक्ष्यन्ते । **अतो** मनसः । संप्रति तदेव मनो **भूयः** प्रचुरतमम्, गुणा अत्यन्तमधिका जाता इति भावः । तानेव गुणान् विवृणोति । **निर्णिक्तं** शुद्धम् ॥ ( ११ ) **परम्** उत्कृष्टम् । [Fol. 16b]

---

1 Ed. शुक्तां । 2 Ed. °पुत्रप्रतिमं । 3 Ed. वदेत् । 4 Ed. जघन्यं । 5 Ed. ब्राह्मणेभ्यः कृतानि । 6 Ed. om. 7 Ed. असपत्नः । 8 Ed. शुक्रं । 9 Ed. अन्योन्येन । 10 Ed. हृष्टवत् । 11 Ed. reads differently. 12 Ed. काल्यं । 13 Ed. क्षतः ।

**धर्माद्** हेतोः। **आनृशंस्यम्** अहिंसा। **वित्तचर्याद्**[1] वित्तपरिग्रहात्। **तस्य** धर्मार्थत्वाद् **भावतः**[2] अभिप्रायात्॥ (१२) **परेण** दैवेन **प्रयुक्तः** प्रेरितः। **नियमं** धर्मरूपम्। **मन्ये** जाने। **दैवं** पूर्वप्राक्तनम्। **मनुष्यात्** पौरुषात्॥ (१३) **कर्मदोषं** दुष्टं कर्म। **पापोदर्कम्** उत्तरत्र पापफलम्। न विद्यते **रूपस्य** स्वरूपस्य **वर्णो** वर्णना यत्र। प्रतिक्षणमनियतत्वात्। **यावन्नरः कामयते** न मलिनयति **त्रिकाल्यं**[3] कालत्रये। अयं तु कालत्रयेऽपि मलिनयन् संज्ञां न लभत इति भावः॥ (१४) **निसृज्य**[4] निधाय॥ (१५) **अङ्ग** हे। **आत्मनः** स्वस्य। **उपक्रोशं** निन्दाम्। **इह** पापम् **नो**[5] न। **वा**-शब्दः शिरश्चालने। इह जन्मनि कृतं पापं न किं परजन्मनि प्रसज्जेदित्यर्थः॥ (१६) **विना तैः** तान् वर्जयित्वा। **अधर्मशब्दः** अकीर्तिः। **त्वत्समं** त्वदुचितम्॥ (१७) **एवंधर्मा नापदः** [Fol. 17a] **संतितीर्षेत्** तरितुमिच्छेत्॥ (१८) परस्परहेतुभावेन स्थितयोः[6]। **विवर्तयिता**[7] विचा[ल]यिता। **इष्टस्य**[8] विषयस्य इच्छाया वा॥ (१९) **अनायम्यम्**[9] अनन्याधीनम्॥ (२०) **कुलक्षयार्थे**[10] क्षयविषयनिमित्ते। **निरयो व्यपादि** विपन्नः॥ (२१) **अकालिकं** तत्क्षणात्। **नाभविष्यन्** न भूता भवेयुः। **पापेन** दुर्योधनकृतेन **पापं** प्रत्यपकाररूपं **निसृज्य**[11] निधाय॥ (२२) **यत्र** यस्मिन् प्रयोजने निमित्तभूते **पार्थः परलोकं** स्वर्गं ददर्श। तत्प्रयोजनम्—**ईश्वराणां** लोकपालानां **विषयाद्** गोचराद् **अन्यत्र**। दिव्यास्त्रग्रहणं हि तत्। तच्च लोकपालगोचरमेव। **अत्यक्रामद्** अतीत्य सर्वान् पराक्रमं कृतवान्। एकत्र चन्द्रमौलिना सह सङ्गरमन्यत्र पुरंदररिपूणां वधः। **स** पार्थः **तथा** तेन प्रकारेण **संमतः** सम्यक्तया मतोऽनुमतो लोकपालानां स्यात्। तत्र हे[Fol. 17b]-तुमाह—**असंशयम्**[12] इति। **मनुष्यकारः** पुरुषकारः। दैवमेव पार्थस्य दिव्यास्त्रप्राप्तौ कारण-मित्यर्थः॥ (२३) **एतान् गुणान्** पराक्रमादीन्। **भावाभावौ** उत्पत्तिविनाशौ। **पारम्** उत्पत्तिविनाशस्य **अविन्दमानो**ऽलभमानः। **कालाद्** ईश्वरात्। कर्म वा इश्वरो वा दैवम्॥ (२४) **आयतनानि** कारणानि। **तानि प्रीत्या न प्रसज्जेत**[13] न सेवेत **दुःखानि** यस्मात्। **अव्यथो** रागव्यथाशून्यः॥ (२५) पुरुषकारव्यतिरेकेऽपि दैवान्वये फलान्वय इत्याह—**न त्वेव** इति। यत्र हि गर्भेऽल्पं चाल्पे पुरुषकारगन्धोऽपि नास्ति, तत्रापि जीवनवृत्त्यादिफलदर्शनात्सत्यपि पुरुषकारे दैवादेव फलमवगम्यते। यथा च देशकालापेक्षया **मातुः पितुः कर्मणा** मैथुनेन **विप्रसूतो**[14] जातः **संवर्धते भोजनेन** मात्रादिदत्तेन। [Fol. 18a] इति पुरुषकारव्यतिरेकेऽपि फलान्वय[15]दर्शनात्पुरुषकारो न कारणम्॥ (२६) एवं प्रियाप्रियादिष्वपि दैवमेव कारण-मित्याह—**प्रियाप्रिये** इत्यादि। सम्यक्चरणापराधयोः स्तुतिनिन्दे **परः** तत्त्वानभिज्ञः करोति। फलं तु तत्रापि दैववशादेव। तथा सति सम्यक्चरणापराधौ व्यर्थौ स्यातामिति चेत्तन्न। तज्ज-न्मनोः पुण्यापुण्ययोर्भाविनि जन्मनि दैवशब्दवाच्ययोर्निष्पादनेन फलवत्तोपपत्तेः॥ (२७) **सोऽहं त्वा** त्वां **गर्हे**। **नो चेद्** यदि। **इदं** दैवम्॥ (२८) **जातपुत्रेषु** पुत्रेषु। **वशं** सामर्थ्यं

---

1 Ed. वित्तचयान्। 2 Ed. भारत। 3 Ed. अतिकाल्यं। 4 Ed. विसृज्य। 5 Ed. reads differently. Apparently Devabodha reads नो वा। 6 This apparently is the explanation of ग्रथितयोः। 7 Ed. बिभर्ति। 8 Ed. दिष्टस्य। 9 Ed. अनानृशंस्यं। 10 Ed. कुरुक्षयार्थे। 11 Ed. विसृज्य। 12 Ed. न संशयः। 13 Ed. reads differently. 14 Ed: अभिप्रसूतः। 15 Ms. °व्यतिरेके विफलत्व।

**गन्ता** प्राप्ता ॥ **कामात्मनां** कर्णादीनां **शमात्**[1] संहारात् ॥ ( २९ ) **प्रग्रहात्** संग्रहात् ॥ ( ३० ) **निपद्ये** यामि । ( १६५* ) **प्रपद्य** प्रपद्यस्व ॥

अनर्थक इव क्वापि गूढगीर्गुम्फिते क्वचित् ।
संजयोक्ते तमः स्यात्तद्गृह्यतां ज्ञानदीपिका ॥
संजययानं समाप्तम् ॥

## ३३

[ Fol. 18b ] **द्वाःस्थमाह महाप्राज्ञः** ( ३३।१ ) इत्यादेः **बहून्क्लेशांस्तितिक्षन्** ( ३४।८३ ) इत्यन्तस्य प्रवृत्तिपरिहारयोर्विषयभूतौ हिताहितौ गुणदोषौ तात्पर्यार्थः । तत्र च पाण्डवानां गुणराशिर्धार्तराष्ट्राणां दोषराशिः । परिग्रहाय परिवर्जनाय चेति भावः ॥

( ३ ) **प्रतिवेदय** कथय ॥ ( ६ ) **अकाल्यम्** अनवसरम् ॥ ( १० ) **संसारिणी** व्यापिनी ॥ ( १२ ) ज्ञातमपि पुनः **शृणोति** । **असंपृष्टः** असम्यक् पृष्टः । **न व्युपयुङ्क्ते** न कथयति । **परार्थे** विषयीभूते । **प्रज्ञानं** लक्षणम् ॥ ( १४ ) **प्रक्रमते** प्रारभते । **अन्तर्मध्ये न वसति** नोदास्ते, प्रारब्धं समापयत्येव । **अबन्ध्यकालः** अवसरज्ञः । अथवा प्रथमे विद्यां द्वितीये धनं तृतीये धर्ममर्जयतीत्यबन्ध्यकालः ॥ (१७) **भूतानां** प्राणिनां पृथिव्यादीनां वा । **योगः** उपायः । **मनुष्याणां** मध्ये ॥ ( १८ ) **प्रवृत्तवाग्** अलग्नवचनः । **चित्रकथः** अद्भुताः क[ Fol. 19a ]था यस्य । **ऊहा** एकदेशज्ञानेनान्यस्यानुमानम् । **प्रतिभानं** तात्कालिकं स्फुरणम् । **आशु** शीघ्रम् ॥ ( १९ ) श्रुतप्रज्ञे परस्परानुरूपे यस्येत्यर्थः ॥ ( २० ) **समुन्नद्धः** अहंकारवान् । **महामना** महेच्छः । **अकर्मणा** वाणिज्यादिव्यापारेण विना, अथवा कर्माभासेन द्यूतादिना ॥ ( २१ ) **परित्यज्य** उपेक्ष्य । **परार्थं** मम स्यादिति **अनुतिष्ठति** । **मिथ्या** छद्मना ॥ ( २२ ) **अकामान्** अनिच्छतः **कामयानान्** इच्छतः ॥ ( २४ ) **कृत्यानि** मन्त्रितानि **संसारयति** प्रकटयति । **विचिकित्सते** संशेते । **क्षिप्रार्थे** क्षिप्रसाध्ये । ( २५ ) **अप्रमत्तेषु** छिद्रे सावधानेषु ॥ ( २७ ) **नैष्कर्म्याद्** औदासिन्यात् ॥ ( ३८ ) **अशिष्यम्** अजिज्ञासुम् । **शून्यं** दरिद्रम् । **कदर्यं** कृपणम् ॥ ( ४० ) **संपन्नं** स्वादु ॥ ( ४१ ) **पापानि** राजद्रोहादीनि । **महाजनः** सङ्घः ॥ ( ४२ ) **उत्सृष्टा** प्रयुक्ता ॥ ( ४३ ) **एकया** एकाकारया, असंशयितयेति यावत् । **द्वे** कार्याका[ Fol. 19b ]र्ये, ताभ्यामन्यात्तस्य तृतीयप्रकारस्याभावात् **विनिश्चित्य** कर्तव्यपरिहर्तव्यतया व्यवसाय । **त्रीन्** शत्रुमित्रोदासीनान् । **चतुर्भिः** सामभेददानदण्डैः । **पञ्च** इन्द्रियाणि । **जित्वा** वशीकृत्य । **षट्** संधिविग्रहयानासनसंश्रयद्वैधीभावान् **गुणान्** । **सप्त** स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं दण्डपारुष्यमर्थदूषणम् । **हित्वा** त्यक्त्वा । अत्र सर्वत्र संख्या सावधारणा तृतीयप्रकाराभावात् । एतत्सर्वं पाण्डवेषु, एतद्व्यतिरेकश्च कौरवेष्विति भावः ॥ ( ४४ ) संख्यालक्षणकाव्यालंकारव्याजेन गुणदोषानाह—**एकम्** इत्यादिना ; व्यतिरेकालंकारमाह—**एकम्** इति । **निश्रवो**[2] भेदः ॥ ( ४५ ) **न भुञ्जीत** अधर्महेतुत्वात् । **न चिन्तयेद्** भ्रमसंभवात् । **न गच्छेद्** अनर्थसंभवात् । **न जागृयाद्** बीभत्सदर्शनश्रवणाभ्यामलक्ष्मीसंक्रान्तिनिर्वेदा[ Fol. 20a ]-

1 Ed. omits. 2 Ed. विस्रवः । Ms. ( corrupt ) निश्रेयो ।

दिप्रसङ्गात् ॥ ( ४६ ) [ **एकमे** ]**वाद्वितीयं** विशेषणाभ्यामेकमवधारयति । तेन सजातीयभेद-व्यावृत्त्या निर्दयमुक्तम् । सच्च त्यच्च **सत्यम्** । **सत्** निषेधबुद्धिः, अविषयत्वात् । नास्तीत्यन्ततः प्रतियोगिन्यपि सत्त्वावभासात् । त्यत् सर्वकारणतया परोक्षत्वात् । **यद्राजन्नावबुध्यसे** इति काकुः । यदेवंविधया बुध्या व्यावृत्त्या च त्वां योजयति तदपि दैवं न बुध्यस इत्यनुकम्पनीय-तामाह । अथवा सत्त्वं विशिष्यते **एकमेव** इत्यादिभिर्विशेषणैः । **यद्राजन्नावबुध्यसे** इति युधिष्ठिरे तदस्तीति शेषः । यद्बलात्तस्य वीर्यवन्तः॰सर्वे धर्माः ॥ ( १७४* ) अथवा सोऽप्यदोष एव । सामर्थ्ये सति प्रतीकारबुद्धेरनुत्पादो हि क्षमा । अत एवाह—**क्षमा हि परमं बलम्** इति । परमत्वं सहजबलस्य । प्रतीकारबुध्यनुत्पादलक्षणेन बलेनावष्टम्भात् ॥ ( १७६* ) **परम्** अक्रो[ Fol. 20b ]ष्टारम् । **दोषैः** वाक्पारुष्यादिभिः । **अक्षमावान्** हि ममानेन गालिर्दत्तो धनं हृतमिति परस्मिन् दोषमारोपयति । स्वस्य व[ च ]नाद( ? )भिघातादिना पापमर्जयति ॥ ( ४८ ) धर्मादीश्चतुरोऽन्यव्यवच्छेदमुखेन श्रेयस्त्वादिना स्तौति—**एको धर्म** इति ॥ ( ४९ ) **ग्रसते भूमिः** जन्मभूमावेव विलयं गच्छतः, कीर्तिमन्तौ न भवत इत्यर्थः । यथा दुर्योधनः ॥ ( ५० ) **विरोचते** द्योतते । **असतो** नीचान् ॥ ( ५१ ) **परस्य प्रत्ययेन** ज्ञानेन कुर्वत इत्येवंशीलौ । **लोको** विचारपराङ्मुखः ॥ ( ५२ ) **कण्टकौ** स्वरयैवेति शेषः ॥ ( ५३ ) **प्रभुः** समर्थः ॥ ( ५४ ) **अतिक्रामो**[1] निष्फलतापादने ॥ ( ५५ ) **न्याया** भेदाः । एतच्च वृत्तानुसारेण बोद्धव्यम् । न नयो धनादिना । **वृत्तविदो**[2] **विदुः** इति वचनात् ॥ ( ५६ ) **उत्तमाधममध्यमा** वा त्वत्पुत्राः ॥ ( ५७ ) **त्रय एवाधना** इति वचनाद्दुर्योधनराज्ये भवानधिकारी[Fol. 21a]-ति[3] त्वमुपालभ्यसे ॥ ( ५८ ) **दीर्घसूत्रैः** करिष्यामीति कालगमकैः । **अलसैः** तमःसमुद्रेऽका-( ? )द्वाङ्मनःकायगौरवादप्रवृत्तिशीलैः । **अशनैः**[4] भोजनपानैः ॥ ( ५९ ) **अभिभूतस्य**[5] अत्यन्तमाक्रान्तस्य । अथवा, अभिभूत्यक्तस्य । **वृद्धो ज्ञातिः** कुलधर्मज्ञत्वात् । **अवसन्नो** धनादिभिः क्षीणः । स हि तस्योन्नतिं वाञ्छंस्तदुन्नतये प्राणैरपि यतते । **सखा दरिद्रो** नित्य-सापेक्षत्वात् । **भगिनी चानपत्या** भर्तृपुत्रयोरभावे भ्रातरि स्नेहातिशयात् । तस्माज्ज्ञानवृद्धत्वा-दवसन्नत्वाद् युधिष्ठिरस्त्वया पार्श्वे स्थापनीयः ॥ ( ६० ) **सद्यस्कानि** सद्यःफलानि ॥ ( ६१ ) **संकल्पं** मनसा चिन्तितम् । **अनुभावं** सामर्थ्यम् । **विनाशं पापकर्मणां** त्वत्पुत्राश्च पापकर्माण इति भावः ॥ ( ६२ ) पितृमातृगुरुपूजाविमुखाश्च त्वत्पुत्राः ॥ ( ६५ ) **छिद्रम्** अत्यन्तवक्रत-[ Fol 21b ]या दुर्निग्रहम् ॥ ( ६६ ) निशातिघातादिना ज्ञानभ्रंशः **तन्द्री** । आत्मात्मीये छेददृष्टिः **भयम्** ॥ ( ६९ ) **दानं** स्वद्रव्यस्य परस्वतापादनम् ॥ ( ७० ) **षण्णां** सत्त्वादीनाम् । **आत्मनि** स्वस्मिन् । क्षणमात्रमप्यहीनानाम्[6] । **ऐश्वर्यं** विभूतिम् । यथा सत्यप्रतिष्ठायां वागस्या-बन्ध्या भवति । स्वर्गं याहीति यद्वचनात्स्वर्गं व्रजति । अथवा, ऐश्वर्यवशित्वं यदिच्छया सत्त्वादयः प्रवर्तन्ते । **पापैरसत्यहिंसादिभिः** । **कृतानर्थैः**[7] कृतनरकादिपातनैः ॥ ( ७१ ) चौरा-दीनां मध्ये न त्वमेकोऽपि, तत्कथं पाण्डवेभ्यो धनमुपजीवसि । अथवा, चौर एवासि, अन्यायेन तद्धनग्रहणात् ॥ ( ७४ ) **स्त्रियो** धातुक्षयकरत्वेन शरीरनाशहेतुत्वात् । **अक्षा** धनक्षयहेतुत्वात् ।

1 Ed. अतिक्रमौ । 2 Ed. वेदविदो । 3 ति missing in Ms. supplied from Arj. 4 Ed. चारणैः । 5 Ed. अभिजुष्टस्य । 6 Apparently explains नित्यानां । 7 Ed. कुतोऽनर्थैः

**मृगया** चौरव्यालद्विषदादिभ्यो विनाशसंभवात् । **पानं** चित्तभ्रान्तिहेतुत्वेन स्वपरविनाशमूलत्वात् । **वाक्पारुष्यं** [ Fol. 22a ] सर्वजनोद्वेगहेतुत्वात् । **दण्डपारुष्यं** वैरकरत्वात् । **अर्थदूषणम्** अर्थविनाशनं तच्च सर्वक्षयहेतुत्वात् । एतानि सप्त व्यसनानि ॥ ( ७५ ) **द्वेष्टि** उच्छेदमिच्छति । **विरुध्यते** सह नावतिष्ठते, अवतिष्ठमानो वा कदनादिकं कुरुते ॥ ( ७६ ) **जिघांसा** शस्त्रादिग्रहणपर्यन्ता । **निन्दया** विद्यमानाविद्यमानदोष.........न। **प्रशंसां** स्तुतिम् ॥ ( ७७ ) **कृत्येषु** दृष्टादृष्टार्थेषु कार्येषु । **अभ्यसूयति** गुणवत्स्वपि दोषानारोपयति ॥ ( ७९ ) **सखिभिः** सुखदुःखसहकारिभिः **महान्** यो यत्राभूतपूर्वः । **संनिपातः** समरं च ॥ ( ८० ) **समये** विरहदग्धस्य वसन्तादौ । **स्वयूथेषु** स्ववर्ग्येषु । **संनतिः** पूजा । **अभिप्रेतस्य** इच्छाविषयस्य, अथवा अभितः प्रेतस्य नष्टस्य । त्वत्पुत्राणां सखायस्तव च पुत्राः पाण्डवा इति परमसु[ Fol. 22b ]खहेतवः ॥ ( ८१ ) विशत्यस्मिन् क्षेत्रज्ञ इति **वेश्म** । नासाक्षिश्रवांसि प्रत्येकं द्वयं द्वयमिति षट्, मुखपायूपस्थास्त्रयः, एवं **नवद्वारम्** । **त्रयो** वातपित्तश्लेष्माणः सत्त्वरजस्तमांसि वा **स्थूणा** आधारस्तम्भा यस्य । **पञ्च** पृथिव्यप्तेजोवाय्वाकाशा उपर्युपरि **भूमयो**[1] यस्य । **क्षेत्रज्ञ** आत्मा । एवं बहुच्छिद्रं शरीरम् । तत्र स्थितस्यान्यायेन राज्याभिलाषो न तवानुरूपः ॥ ( ८२ ) **मत्तो** यौवनादिना । **प्रमत्तो** मद्येन । **उन्मत्तो** वायुप्रकोपात् । **श्रान्तो** भारादिना ॥ ( ८५ ) **काममन्यू** च धार्तराष्ट्रेषु नित्यं तिष्ठत इति भावः । **प्रतिष्ठापयति**[2] स्थिरीकरोति । **विशेषविद्** गुणागुणज्ञः । **क्षिप्रकारी** शीघ्रकरणशीलः ॥ ( ८६ ) **मात्राम्** इन्द्रियाणि । **क्षमां** समभिव्याहारात् ॥ ( ८७ ) **युक्तः** तच्छिद्रे एकाग्रचित्तः । **बुद्धिपूर्वं** ममेति ज्ञात्वा ॥ ( ८८ ) **उद्यानम्**[3] उत्थानम् । **धुरंधरः** कार्योद्वहनक्षमः ॥ [Fol. 23a].( ९० ) **आकारितः** पृष्टः, सभायामाहूतो वा । **मात्रार्थं** स्वल्पे वस्तुनि ॥ ( ९१ ) **नाभ्यसूयति** कंचनेति शेषः । प्रत्युत **अनुकम्पते** । **प्रातिभाव्यं** प्रतिभवम् । **नात्याह** नातिक्रम्य **कंचिद्**[4] ब्रूते ॥ (९२) **न विकत्थते** स्व...घया **नान्यान्** अभिभवति । **मूर्च्छितः** समुच्छ्रयं गतः ॥ ( ९३ ) **नास्तमेति** न तेजसो हीयते, न पलायते वा । **मन्युं** शोकम् ॥ ( ९४ ) **प्रतीतः** तुष्टः ॥ ( ९५ ) **समयान्** मन्त्रादिमतानि । **बुभूषते** प्राप्तुमिच्छति ॥ ( ९६ ) **दम्भं** परवञ्चनम् । **मोहं** विपरीतां बुद्धिम् । **मत्सरं** कोपम् । **पापकृत्यं** पापक्रियाम् । **पूगवैरं** सङ्घविरोधः ॥ ( ९७ ) **दैवतं** देवतार्थं कर्म । **मङ्गलानि** प्रसन्नवस्तुदर्शनालम्भनप्रदक्षिणीकरणादीनि । **प्रायश्चित्तं** चान्द्रायणादि । **लोकवादान्** लोकोक्तीः । **उत्थानम्** उद्यम् । **राधयन्ति** साधयन्ति ॥ ( ९८ ) **पुरोदधाति** अग्रे करोति ॥ ( १०० ) **चिकीर्षितं** कर्तुमिष्टम्, **विप्र**[. Fol. 23b ]**कृतम्** अपकारम्, हृदयस्थम् **अन्ये न जानन्ति** । **अल्पः**[5] अपि **अर्थो न व्यथते** न प्रकटतां गच्छति ॥ ( १०१ ) **प्रशमे** मैत्र्याम् । **मृदुर्वचसि** । **संज्ञायते** प्रकाशते ॥ ( १०२ ) **आत्मना** स्वयमेव । **अपत्रपते** आत्मनि लज्जते । **स्वपुरः**[6] ( ? ) पूज्यः ॥

## ३४

( २ ) **अजातशत्रोः पथ्यं** परिणातिसुरसं **श्रेयस्करं कुरूणाम्** इत्यन्वयः ॥ ( ३ )

---

1 Ed. पञ्चसाक्षिकं । 2 Ed. प्रतिष्ठापयते । 3 Ed. उद्योगं । 4 Ed. किंचित् ।
5 Ed. स्वल्पः । 6 Apparently Devabodha reads सर्वलोकस्वपुरः । Ms. स्वपुरः ( ? ) ।

**पापाशङ्की** विनाशोत्प्रेक्षी । **पापमेव** विनाशकारणं दुरितमेव । **मनीषितं** मनसि स्थितम् ॥ ( ५ ) **भावम्**[1] उत्तरोत्तरसत्ताम् ॥ ( ६ ) **मिथ्योपेतानि** छद्मयुक्तानि । **अनुपायेन** पुरुषव्यापारं विना । तत्र हि दैवं कारणम्, पुरुषेणानुष्ठीयमानं न सिध्यति ॥ ( ७ ) **योगः** शास्त्रम् । **उपाययुक्तं** दुष्टैः साधनैः संपन्नम् । तदारभ्यमाणमपि मनोग्लानिकरमेव ॥ ( ८ ) **अनुबन्धान्** आरम्भानन्तरप्रतिबन्धान् । **संप्रधार्य** विमृश्य । **वेगेन** औत्सुक्येन ॥ ( ९ ) **विपाकान्** विरुद्धान् परिणामान् । [ Fol. 24a ] **उत्थानम्** उदयम् । अनुबन्ध...परिणामयोः सतोरप्युदयलोभात्कुर्वीत । अथवा ताभ्यां दूषितत्वादुदयफलमपि न कुर्वीतेति परमार्थः ॥ ( १० ) **स्थाने** तदवस्थायाम् । **कोशे जनपदे दण्डे** सेनायां प्रत्येकमेषु ये **स्थानवृद्धिक्षयास्**तेष्वनुबन्धविपाकोदयलक्षणानि प्रमाणानि यो न वेद **न स राज्ये** प्राप्तेऽप्य**वतिष्ठते** स्थिरो न भवतीत्यन्वयः ॥ ( ११ ) **युक्त** एकाग्रः ॥ ( १२ ) **असांप्रतम्** अयुक्तम् । ( १३ ) **भक्ष्योत्तमेन** किंच उलूककणिकादिना रूप-मात्रदर्शनेन **अभिपतति** धावतीत्येवंशीलः ॥ ( १४ ) **परिणमेत्** रसभावेन जीर्येत् । **अद्यं** भक्षणीयम् ॥ ( १५ ) **बीजम्** अङ्कुरहेतुः ॥ ( १७ ) **अविहिंसया** अविनाशेन ॥ ( १९ ) **कुर्यात्** फलदर्शनात् । **न** कुर्यात्तददर्शनात् ॥ ( २० ) **नित्यं तथागताः** कर्तुमशक्याः समुद्रतर[ Fol. 24b ]णादयः । तथा पौण्डवोन्मूलनमपीति भावः ॥ ( २१ ) **लघुमूलान्** लघूपायान् ॥ ( २२ ) **ऋजु** क्रोधादिकृतविकारहीनम् **पिबन्निव** स्नेहेनेति शेषः । **तुष्णीकमासीनम्** उदासीनम् । **अनुरज्यन्ति** अनुरागविषयं कुर्वन्ति ॥ ( २३ ) चक्षुरादिभिश्चतुर्भिर्यो लोकं प्रीणयति तस्मिँल्लोकः प्रीयते ॥ ( २५ ) **अनये स्थितः** अनये स्थैर्यवान् ॥ ( २७ ) **प्रतिसंवेष्टते** संकुचति । अर्थान्तमेव यथा जन इति शेषः ॥ (२८) **य एव** यादृशः । **स एव** तादृशः ॥ ( २९ ) **न जहाति** श्रियं स्वयमपि **न हीयते** नाल्पायुर्भवति ॥ ( ३० ) **प[रिस]र्पत**[2] इतस्ततो धावतः ॥ ( ३१ ) **संचिन्वन्** एकैकं गृहीत्वा समुदितं कुर्वन् । **शिलाहारी** कणिशभोजी, शिलं कणिशम्, **यथा** ॥ ( ३३ ) **दुदुर्हा** बलवद्भिः [ पुरु ]षै[2] र्बध्वापि दुह्यत इति दुःखमनुभवति । एवं राज्यमविभजन्तस्त्वत्पुत्रा[3] अपि प्राणान्तमनुभविष्यन्तीति भावः ॥ ( ३४ ) [ Fol. 25a ] **यदतप्तं** वंशादि **प्रणमति तन्न** लोहादिवत्संताप्यते । **यच्च स्वयम्** आत्मना **नतं दारु तन्न** श...वंशादिवन्नाम्यते ॥ ( ३५ ) **इन्द्राय** परमेश्वराय ॥ ( ३६ ) **पर्जन्यनाथाः** तेन तृणादिजननात् । **मित्रबान्धवाः** तैः समये उपक्रियमाणत्वात् । **पतयो बान्धवा** भरणपोषणाद्युपकारकरणत्वात् । **वेदबान्धवा** वेदेन ज्ञानानुष्ठानकरणात् ॥ ( ३७ ) **योगेन** अभ्यासेन । **मृजया** उद्वर्तनस्नानादिना । ( ३८ ) **मानेन रक्ष्यते धान्यम्** अमितं हि रक्षांसि जनाश्च हरन्तीति लोकश्रुतिः । **अनुक्रमो** धुरि बन्धनम् । **अभीक्ष्णदर्शनं** पुनः पुनर्दर्शनम् । **अचेलता**[4] वस्त्रहीनता । अचेलतया हि लज्जमाना मुखमपि नेक्षते परस्य ॥ ( ३९ ) **कुलं** प्राच्योऽन्वयः ॥ ( ४० ) **ईर्ष्युः** असहिष्णुः । **कुले** पूर्वसंताने । **अन्वये** पुत्राद्युत्तरसंताने । **अनन्तकः** कुलादीना[ Fol. 25b ]मन्यतमदर्शनादपि । ईर्ष्यानलोत्पादस्य नित्यसुलभत्वात् ॥ ( ४१ ) **अकाले** फलसिद्धेः प्राक् । उत्तरत्र मन्त्रभेदेऽपि न दोषः । यदि पु[न]र्न[5] बिभियाद् **येन** मद्येन **माद्येत तदपि पिबेत्** । मद्यमेव पीतं स्यादित्यर्थः ॥

---

1 Ed. भवम् । 2 Lacuna in Ms. 3 Ms. °विभजात° । 4 Ed. कुचेलतः ।
5 Dropped in Ms.

( ४३ ) **असन्तमप्यात्मानं सन्तं मन्यन्ते** इत्यन्वयः । **विश्रुतं** प्रसिद्धम् ॥ ( ४४ ) **गतिः** मार्गः ॥ ( ४५ ) **शीलवता** स्वभावात्प्रशस्तप्रवृत्तिकृता ॥ ( ४८ ) **संपन्नतरं** प्रयत्नसिद्धम् ॥ ( ४९ ) **अपि कार्ष्ठं हि जीर्यते** नास्तीति बुद्धिलक्षणेनानलेन जाठरानलस्य तथा परिपोषात् ॥ ( ५० ) **अवृत्तिर्जीवनाभावः** ॥ ( ५१ ) **ऐश्वर्यमदेन** पापिष्ठाः पापबहुलाः ॥ ( ५२ ) **अनिग्रहैः** अनिवारितैः ॥ ( ५३ ) **पञ्चवर्गेण** इन्द्रियैः । **सहजेन** शरीरसमकालभाविना । **आत्मानं** क्षेत्रज्ञम् तनूकुर्वता । यावद्यावदिन्द्रियाणि विषयमनुधावन्ते तावत्तावदात्मा तत्क्रियाभिरेव तिरो- [ Fol. 26a ]धीयते ॥ ( ५५ ) **देशः** सतामुपदेशः, **रूपं** तन्निरूपणीयो नयः तेन **आत्मानं** यो जयेत् ॥ ( ५६ ) **विकारिणां**[1] विरुद्धकारिणाम् ॥ ( ५९ ) **अर्थतो** अर्थेन **अनर्थं** कलहपरदारहरणादि । **अनर्थतः** स्तेयादेः **अर्थं** धनं **पश्यन्** भविष्यीति मन्यमानः । **प्रसृतः** प्रवृद्धः । **बालः** अज्ञः । **सुदुःखम्** आदिमध्यान्ते दुःखमयम् ॥ ( ६२ ) **आत्मना** अहमिति प्रतीतिलक्षितेन चिद्रूपेण **आत्मानं** तमेव **अन्विच्छेत्** प्रतीयात् । न मनःप्रभृतिकरणजालैः । **मनोबुद्धीन्द्रियैर्यतैः** इति विभक्तेर्व्यत्ययाद् यतेषु इति बोद्धव्यम् । **आत्मैव बन्धुः** स्वरूपभूतानन्दस्फोरकत्वात् । **आत्मैव रिपुः** पुर्यष्टकादावनात्मन्यात्मबुद्धिवितरणात् ॥ ( ६३ ) **क्षुद्रं** स्वल्पच्छिद्रम् **अक्षं** गवाक्षम् । **जालेन** मत्स्यपाशेन, इन्द्रियवर्गेणेति यावत्, **झषाविव** । झषौ सर्वाशित्वाद् **उरू** महान्तौ **अपिहितौ** छन्नौ । प्रकृष्टं ज्ञा[ Fol. 26b ]नमात्मसाक्षात्कारः । **विलुम्पतो** विविधाभिश्चेष्टाभिराच्छादयतः ॥ ( ६४ ) **समवेक्ष्य** सम्यग्रक्षित्वा । संभ्रियन्ते पुष्टाः क्रियन्त इति **संभारा** विषयास्तान् **अधिगच्छति** भुङ्क्ते ॥ ( ६५ ) **पञ्चसु** इन्द्रियेषु विषयेषु वा **अभ्यन्तरान्** अन्तर्वर्तिनः शत्रून् षट् कामादीन् । **मतिर्मन एव क्षयो** गृहं येषाम् ॥ ( ६७ ) **मिश्रभावात्** सहवासात् ॥ ( ६८ ) **निजान्** सहजान् । **उत्पतत** उत्पथेन गच्छतः । **पञ्च** इन्द्रियाणि विषयाः । **पञ्च प्रयोजनानि** येषाम् ! **न निगृह्णाति** न निरुणद्धि ॥ ( ६९ ) **अनसूया** असूयाविरोधि परगुणग्रहणम् । **आर्जवं** विहितेन वर्त्मना गमनम् । **शौचं** मलक्षालनम् । **संतोषः** प्राप्तादन्यत्रालंबुद्धिः । **दमो** यथेष्टविनियोगयोग्यता मनसः । **सत्यं** सर्वभूतानभिघातकवाङ्मनसी । **अनायासः** क्लेशातिकराणां पुण्यानामप्यनुष्ठानम् ॥ [Fol. 27a] ( ७० ) **तितिक्षा गुप्ता** रक्षिता मौनेनासत्यवर्जनेन वा । **अन्त्येषु** जघन्येषु ॥ ( ७१ ) **आक्रोशो** गालिः । **परिवादः** परोक्षे दोषग्रहणम् ॥ ( ७३ ) **वाक्संयमो** यस्य पारुष्यहीना वाक् ॥ ( ७५ ) **बीभत्सं** जुगुप्सितम् ॥ ( ७६ ) **कर्णिनः** फलके कर्णयोगिनः । **नालीका** नलिकाक्षेप्याः । **नाराचाः** सर्वलोहाः । **निर्हरन्ति** निःसरन्ति ॥ ( ७८ ) **अपाचीनानि** अपचयकारणानि, अधस्तनानि वा ॥ ( ७९ ) **कलुषं** पापम् । **भूतायां** प्राप्तायाम् ॥ ( ८० ) **परीता** गता ॥ ( ८१ ) **शासिता** शत्रूणामिति शेषः ॥ ( ८३ ) **अनुक्रोशात्** कृपायाम् । **आनृशंस्याद्** अहिंसायाः ॥

## ३५

**ब्रूहि भूयो महाबुद्धे** ( ३५।१ ) इत्यादेः **तेषु वर्तस्व पुत्रवत्** ( ३५।६७ ) इत्यन्तस्य विरोचनसुधन्वाख्यानतात्पर्यार्थेन पुत्रप्राणेषु गच्छत्स्वपि सत्यमेवाश्रयितव्यमिति दृष्टान्ती-

---

1 Ed. विकारिषु ।

कृतेनोपदर्शिताशिष्टार्थाः । धर्माः सर्वे संपूर्णाः पाण्डवेषु, मत्पुत्रेषु वाधर्माः [ Fol. 27b ] समग्रा इति पाण्डवेषु पुत्रवद्वर्तमानेन राज्यं समर्प्यताम्, पुत्रेभ्यश्चामित्रवद्वर्तमानेन राज्यमाच्छिद्यतामिति तात्पर्यार्थः ॥

( २ ) **समे एव**[1] **स्याताम्** इति नियमस्याविवक्षितत्वात् । **आर्जवं तु**[2] **विशिष्यते** इति न विरोधः । **आर्जवं** धर्मानुसारिणी प्रवृत्तिः ॥ ( ५ ) **अत्र** आर्जवे ॥ ( ६ ) **किं स्विद्** इति व्यवहितेन संबन्धः ॥ ( ७ ) देवद्विजातिषु **वयं सत्तमाः** सच्छ्रेष्ठाः ॥ ( ८ ) **आस्स्व** तिष्ठात्र **प्रतीक्षाव** विलम्बावहे **उपस्थाने** स्थानविशेषे ॥ ( १० ) **अन्वालभे** वदे । **एकत्वं** समत्वमुपसंपन्नः प्राप्तः । समाना[ नां ] हि एकासनत्वम् । **आसेयम्** उपविशेयम् ॥ (११) **अधः**[3] मदासनात् । **फलकं** पट्टम् । **कूर्चं** दर्भासनम् । **बृषीं** न्यूनासनम् ॥ ( १२ ) **पिता ते** प्रह्लादः ॥ ( १४ ) **पणं** पारं करोति । **ये विदुः** तानिति शेषः ॥ ( १५ ) **स्थाता** उपस्थाता ॥ ( १७ ) **न चरितं** न सहासितम् ॥ ( १८ ) **किम्** आक्षेपे **वां**[4] युवयोः [ Fol. 28a ] **चरितम्** आगमनम् । **सह** यौगपद्येन । आक्षेपे हेतुः—**न पुरा चरथः**[5] **सह** इति । **सख्यं** संप्रतीति शेषः ॥ (२०) **पीवरी** पुष्टा **कृता**, अर्घ इति शेषः ॥ (२१) **पथ एव** मार्गादिव, पञ्चमी ॥ मार्गोपस्थितेरेवार्घहेतुतामह—**नौ** आवयोः ॥ ( २२ ) पुरो गर्भनिष्क्रमणात्प्रथमं शुक्ररूपेण धीयत इति **पुरोधाः**[6] पुत्रः । **अन्य**-शब्दः काकाक्षिवत् संबन्धनीयः । पुरोधा अन्यो **भवान्** अन्यः । **साक्ष्ये** साक्षार्हे कर्मणि **स्थितौ**[7] इत्यन्वयः ॥ ( २०८* ) **औरसाय** पुत्राय **नो**ऽस्मभ्यं वा उत्तमत्वं परीक्ष्य प्रदद्यात्, तथा सति **प्रियं धनं स्याद्** इत्यन्वयः ॥ ( २३ ) **नैव ब्रूयात्**[8] तुष्णीं तिष्ठेत् । एतच्च सभाप्रवेशवारणपरम् । **दुर्विवक्ता** मिथ्यावादी । **किं व**[ **सेत्**[9] ] किं फलं प्राप्नुयात् इत्यर्थः ॥ ( २४ ) **अधिविन्ना** कृतसापत्निका स्त्री ॥ ( २६ ) **पशुः** चतुष्पदमात्रम् । **पश्च** पूर्वपुरुषान् ॥ ( २८ ) **अङ्गिरा** सुधन्वपिता । **त्वत्** त्वत्तः **श्रेयान्** । **मातुः** तवेति शे[ Fol. 28b ]षः ॥ ( ३५ ) मायास्तीत्येवं [ **मायाविनं** ][7] **छन्दांसि** वेदास्त्यज[ न्ति ][10], **मायया वर्तमानं** प्रयुञ्जानं पुनस्त्यजन्तीति किं वक्तव्यमित्यभिप्रायः ॥ (३६) **मत्तापानं** मत्तानां पानगोष्ठीम् । **विकलम्**[11] असंपूर्णकायम् । **पूगवैरं** सङ्घावरोधम् । **अन्तरं** विच्छेदम् ॥ ( ३७) सामुद्रकं[12] वहित्रादिसाधनम् । **चौरपूगं**[13] तस्करगणम् । **शलाकाधूर्तम्**[14] अक्षदेविनम् ॥ ( ३८ ) मीयतेऽनेनेति **मानः** कालः । तस्मिन्नग्निहोत्रादीनि **अभयंकराणि** । **अयथाकृतानि** अकालकृतानि । प्रकृते—त्रयोदशवर्षाणि छलेन सत्येन वा पाण्डवानां वञ्चनं यथा तथास्तु, सांप्रतं तु अकालकृताग्निहोत्रादिवदकाले क्रियमाणं वञ्चनं भयाय स्यादित्यभिप्रायः ॥ ( ३९ ) **आगारदाही**[15] **गरदः**...त्वत्पुत्रेषु जतुगृहदहनभीमसेनविषदानाभ्याम् सुप्रसिद्धः । **कुण्डाशीः** बहुभुक्, अथवा अमृते भर्तरि जारजातस्यान्नाशी । **पर्वकारः** [ Fol. 29a ] पर्वसु मूल्यं गृहीत्वा क्रियाः कारयन् । **सूची** नक्षत्रसूचकः, अथवा राज्ञि पैशुन्यकर्ता ॥ ( ४० ) **भ्रूणो** गर्भः, सगर्भा स्त्री वा, बालो वा, स्वशाखाध्यायी

---

1 Ed. एते । 2 Ed. वा । 3 Ed. अथ । 4 Ed. वै । 5 Ed. चरतः । 6 Ed. reads differently. 7 Ed. स्थितः । 8 Ed. प्रब्रूयात् । 9 Dropped in Ms. 10 Supplied from sense. 11 Ed. कलहं । 12 Ed. सामुद्रिकं । 13 Ed. चोरपूर्वं । 14 Ed. शलाक° । 15 Ed. अगार° ।

**ब्राह्मणो** वा । **तीक्ष्णः** परुषवाक् । **काकः** अशुचिः । ( ४१ ) **स्रुवप्रग्रहणः** अभिचारकृद् ग्रामयाजको वा । **व्रात्यः** संस्कारहीनः । कीनं पापं तेन सहाश्नातीति **कीनाशः** । अर्थे सत्यप्यदत्त्वा भुञ्जानः ॥ ( ४२ ) **तृणोल्कया** वह्निना । **भद्रो गौः धूर्युगे**[1] धुरः काष्ठे । **व्यवहारे** ऋण-शोधने । **सुहृद्** उपकारेण **अरयः** अपकारेण ॥ ( ४३ ) **धैर्यम्** अक्षोभं चित्तस्य । **आशा** तृष्णा ॥ ( ४४ ) **मङ्गलाद्** दध्यक्षतादिदर्शनालभनधारणादेः । **प्रागल्भ्यात्**...पालनप्रौढेः । **दाक्ष्यात्** शीघ्रकारितायाः । **संयमाद्** अतिव्ययत्यागात् । **प्रतितिष्ठति** स्थिरो भवति ॥ (४५) **दीपयन्ति** प्रकाशयन्ति **कौल्यं** कुलीनता । [Fol. 29b] (४६) **महानुभावान्** महा-प्रभावान् । **संश्रयते** जयति **प्रसह्य** हठेन । कोऽसौ गुण इत्यत आह—**राजा** इति । एष गुणो राजसत्कारः ॥ ( ५० ) **रूपं** श्रीः...ता । **श्रुतं** शास्त्रतात्पर्यार्थावधारणम् । **विद्या** उपासना-ज्ञानम्, कलाज्ञानं वा । **कौल्यं** कुलाचारः । **शीलं** स्वभावतः शुभा प्रवृत्तिः । **बलं** पदात्यादि । **शौर्यं** विक्रमः । **चित्रभाष्यम्** आश्चर्यकर्तृत्वम् । **संसर्गस्य** सेव्यताया **योनयः** कारणम् ॥ (५१) **पापकीर्तिः** अकीर्तिमान् । **पापं फलं** नरकम् ॥ ( ५४ ) **असूयकः** परनिन्दकः । **दन्दशूकः** परमर्मप्रहरणशीलः । **निष्ठुरो** वाङ्मनःकायैः परुषकारी । **वैरकृद्** विरोधकर्ता । एवंप्रकृतिः पापमेवावगच्छतीत्यर्थः ॥ ( ५५ ) **अकृच्छ्रं** सुखम् ॥ ( ५६ ) **आगमयति** गृह्णातीति यावत् ॥ ( ५९ ) विगतो विशेषेण जित्वा गतो निर्गतः संग्रामाद् **विगतसंग्रामः** । मनस्ते-जस्वि परिभवासहिष्णु [Fol. 30a] प्रशस्तमस्यास्तीति **मनस्वी**[2] । तस्या एव...जीवावधे-[3] र्मनस्वितायाः गतं प्राप्तं पारं येन स **गतपारम्** ॥ ( ६० ) **असंवृतं** प्रकटं छिद्रान्तरं पतति ॥ ( ६१ ) आत्मा प्रशस्तः प्रमादादिहीनो यस्य स **आत्मवान्** ॥ ( ६२ ) **प्रभव** उत्पत्तिस्थानम् । **नाधिगन्तव्यो** न परीक्षणीयः ॥ ( ६४ ) **सुवर्णपुष्पाम्** इत्यत्र क्ष[त्रत्व] कृतविद्यत्वसेवाभि-ज्ञत्वादीनामर्थ[4] साधनत्वातिशयः प्रतीयमानस्तात्पर्यार्थः । सुवर्णपुष्पामित्यविवक्षितो वाच्यार्थः प्रत्यक्षविरोधात् ॥ ( ६५ ) **बुद्धिः श्रेष्ठं** साधनं येषाम् । **बाहु**-शब्देन विग्रहो विवक्षितः । **जङ्घाजघन्यानि** पादपर्यटनसाध्यत्वेन हीनानीत्यर्थः ।......[5]यानि भारेण साध्यन्ते तानि **प्रत्यवराणि** हीनादपि निकृष्टानि ॥

## ३६

**अत्राप्युदाहरन्तीम्** ( ३६।१ ) इत्यादेः **न वृत्तमाप्नोति महाकुलानाम्** ( ३६।२१ ) इत्यन्तस्य सद्वृत्तमसद्वृत्तं च तात्पर्यार्थः ॥

( २ ) **हंसः** परि[ Fol. 30b ]व्राड्विशेषः ॥ ( ३ ) **अस्मो** भवामः । **काव्यां** वर्णनीयाम् ॥ ( ४ ) **ग्रन्थिः** अहंकारममकारौ, उभयसंघटनात्मकत्वात् । अनात्मबुद्धिरहंकारः, .........चात्मीयबुद्धिर्ममकारः ॥ ( ५ ) **आक्रुश्यमानो** वाचा परिभूयमानः । **मन्युः** शोकः, न क्रोधः क्षमावति क्रोधाभावात् ॥ ( ६ ) **पूजार्हस्य तदकरणम्** अवमानः । **उत** अहो । अतीत्य

---

1 Ed. युगे only. 2 Ed. तपस्विनं । 3 Ms. apparently corrupt here, reads : याङ्गीवावध– । 4 Ms. reads for the lacuna left here : संघायां पर्येद्य ( ? ) ।

सर्वान् स्वस्मिन् गुणाभिमानः अतिमानः ॥ (७) **रुष्यतीं**[1] हिंस्राम्। **धर्म आरामः** क्रीडा यस्य ॥ (८) **अरुंतुदं** मर्मच्छिदम्। **परुषं** क[टु]... । **निर्ऋतिम्** अलक्ष्मीं राक्षसीं वा ॥ (९) **बाणैः** रूक्षशब्दैः । **उग्रत्वम्** असह्यत्वात्, **दीप्तत्वं** दाहकत्वात्[2] । **विरिच्यमानः** तनूक्रियमाणः । **अतिरिच्यमानः** अतिरेकं व्रजन्। **सुकृतं मे दधाति** पुष्णातीति **कविर्विद्यात्** ॥ (१०) **रङ्गवशं** रागम् ॥ (११) **वादं** विरुद्धं वचः । न **प्रतिहन्यात्** स्वयं **न घातयेत्** परेण ॥ [ Fol. 31a ] **पापम्** अनिष्टम्। **आगताय** देवाभिमुख्येन गताय ॥ (१२) **अव्याहृतं** मौनम् । **व्याहृतात्** सत्यासत्याभ्यामनिरूपितात् । **तत् सत्यरूपं व्याहृतं द्वितीयं** द्विगुणमव्याहृतादिति संबन्धनीयम् । **तत्** सत्यं **प्रियरूपं** द्विविशेषणं **व्याहृतं तृतीयं** त्रिगुणं प्रियाप्रियसाधारणात् सत्यादिति योजनीयम् । **तत्** सत्यप्रियधर्मरूपं त्रिविशेषणं **व्याहृतं चतुर्थं** चतुर्गुणं धर्माधर्मसाधारणात् प्रियात् ॥ (१३) **संनिविशते**[3] सह वसति । **उपसेवते** गुणोपजीवनधिया । **यादृगिच्छेद् भवितुं** यन्मयचित्तो भवेत् ॥ (१४) **यतो यतो** विषयात् **निवर्तते** दोषदर्शनेन निवृत्तरागो भवति। **विमुच्यते** तत्कृतदुःखैर्न स सृज्यते ॥ (१५) **न जीयते** उत्तमगुणत्वात् ।[4] **न जिगीषते** परद्रोहव्यावृत्तत्वात् । **निन्दा** सदसद्दोषाभिधानम् । [ Fol. 31b ] **प्रशंसा** सदसद्गुणाभिधानम् ॥ (१६) **भावम्** उदयम्। **अभावो** नाशः ॥ (१७) **सान्त्वयति** साम्ना वैरं निवर्तयति । **नानर्थकं** सफलं यदा भवति । **राद्धापराद्धे** सेवापराधौ ॥ (१८) **नावर्तते** न निवर्तते । **मन्युवशाद्** हेतोः परापकारादिति शेषः । **कला** आरम्भका अवयवा विद्या वा ॥ (१९) **परेभ्यो** हेतुभूतेभ्यः । स्वस्य **कल्याणं** शुभं दृश्यमानमपि **न श्रद्दधाति** न तथेति मन्यते । **आत्मशङ्कितः** यथाहं परोपकारं न करोमि तथैतेऽपि न कुर्वन्तीति शङ्कया ॥ (२१) **असतां बलेन** कपटादिना । **उत्थानाद्** उद्यमात् । **पौरुषेण** पुरुषकर्मणा सेवादिना ॥

**महाकुलेभ्यः**[5] **स्पृहयन्ति देवाः** (३६।२२) इत्यादेः **साध्वाचारः साधुना प्रत्युदेयः** (३७।७) इत्यन्तस्य कुलादीनां धर्माधर्मसाधनमनेकविधानामुपादानं हानं च तात्पर्यार्थः ॥

(२३) **तपः** स्वधर्मवर्तित्वम्। **वितानाः** यज्ञाः । [ Fol. 32a ] **सम्यग्वृत्तानि** आचाराः कार्याणि येषां गुणानाम् ॥ (२४) **व्यथते** चलति । **प्रसादेन** विजातीयानभिभवेन । **ये** पुरुषाः **कुले कीर्तिमिच्छन्ति** त एव पुत्रपौत्रादिरूपेण संतत्यमाना महाकुलानि ॥ (२५) **अविवाहैः** विना दारपरिग्रहैः । **उत्सादनेन** वेदविहितानुष्ठानत्यागेन ॥ (२७) **परिभवात्** ताडनप्रत्यक्षदोषग्रहणादिरूपेण । **परिवादात्** परोक्षे दोषग्रहणात् ॥ (२८) **पुरुषतोऽश्वतः** चेति तृतीयाबहुवचनेन तसिल् ॥ (२९) **वृत्ततो** वर्तनेन ॥ (३१) **समितिं** सभाम् **निर्वपेत्** कुर्यात् ॥ (३२) अतिथिर्यथातथा प्रीणनीयः, धनाभावे **तृणादिभिरपि** । एषामप्यभावे **वाक् चतुर्थी** चतुर्णां पूर्णी । **सूनृता** प्रिया सत्या च ॥ (३३) **श्रद्धया** शास्त्रप्रतिपादिते वस्तुन्येवमेवेति धिया अभिरत्या वा । **संस्कृतिं**[6] संस्कारम् **उपनीतानि** प्रापितानि । [ Fol. 32b ] सत्कृतिं नीतानि **प्रवृत्तानि** प्रकृष्टवृत्तानीत्यन्वयः ॥ (३४) **सूक्ष्मोऽपि**

1 Ed. रुशती । 2 Ed. reads अनलार्कदीप्तैः । 3 Ed. संविवदते । 4 Ms. repeats, wrongly, न जिगीषते उत्तमगुणत्वात् । 5 Ed. महाकुलानां । 6 Ed. सत्कृतिं।

**स्यन्दनो रथो नृपतेर्भारं**[1] **सोढुं**[2] **शक्त** इत्यन्वयः। **महीजा** वृक्षाः। **युक्ता** वृत्तेनेति शेषः॥ (३५) **यच्छङ्कितेनोपचर्यं तद्** अपि **न मित्रमि**त्यन्वयः। **इतराणि** कूटमित्राणि **संगतानि** संयोगमात्रभाञ्जि॥ (३६) **अस्य** कूटमित्रस्य। **बन्धुः** यौनसंबन्धी॥ (३७) **पारिप्लव-मतेरन्यद्**[3] अन्यथा मन्यमानस्य॥ (३९) **अकस्माद्** हेतोः। **अभ्रं** मेघः **पारिप्लवं** चलं पवनपरवशत्वात्॥ (४२) **संतापः** किं कृतं मयेति पश्चात्तापः॥ (४३) **अनवाप्यं** फलाभावम्॥ (४४) पुरुषदशाया अत्यन्तमाह–**पुनः** इति॥ (४५) **पर्यायतः**[4] क्रमेण॥ (४७) **तनुः** तपसा कृशः। **उच्चः** स्वभावादुदारः। **शिखी** यज्ञेषु कृतचूडाबन्धः। **राजा** युधिष्ठिरः। अथवा **शिखी** वह्निः स च **तनुर**प्युच्चः सति दार्ढ्ये प्रबलतापन्नः। **मन्दानां** भाग्यहीनानाम्॥ (४८) **उद्विग्नं** भीतम्। [ Fol. 33a ] **सत्त्वं**[5] बुद्धिः, कार्ये कारणोपचारः॥ (४९) **विद्या** आत्मसाक्षात्कारः। **तपः** स्वधर्मवर्तित्वम्। **शान्ति** निर्वाणम्॥ (५०) शान्तिसाधनानां विद्या-दीनामवान्तरोपायानाह–**बुध्या** इति। **बुध्या** प्रकृतिपुरुषविवेकदर्शनेन। **भयं** शरीराद्युच्छेदे स्वोच्छेदत्वम्। **महद्** ब्रह्म। **त्यागेन** संन्यासेन॥ (५१) **वेदपुण्यं** वेदाध्ययनधर्मम्। **दान-पुण्यं** वेदार्थानुष्ठानजनितप्रवृत्तिधर्माणामुपलक्षणम्। **विचरन्ति** विवेकेन जानन्ति, गत्यर्थानां ज्ञानार्थत्वात्॥ (५३) **भिन्नाः** सांहत्यात्परिभ्रष्टाः। ते हि निद्रादिकं न प्राप्नुवन्ति॥ (५५) स्वयोगक्षेमवित्तानुकूलत्वाद् **योगक्षेमम्** अलब्धलाभलब्धपरिरक्षणे, समाहारादेकवचनम्। **न कल्पते** न समर्थं भवति। एकस्मिन् परिभवसंभवात्॥ (५६) **संपन्नं** संपत्तिः॥ (५७) **तनवः**[6] सूक्ष्माः। **आयता** विस्तृताः। **बहुला** घनाः। [ Fol. 33b ] **समा** एकमानाः। **आयसान्** [7]वेमकण्टकाद्याघातान्॥ (५८) **धूमायन्ते** धूममुद्वहन्ति। **व्यपेतानि** अमिलितानि॥ (६०) **एकजः** एकाकी। **प्रसह्यः** शक्यः। **शाखास्कन्धम्** इति वृक्षविशेषणम्, शाखा-स्कन्धसंहारत्वाद् वृक्षस्य॥ (६५) **अनातुरत्वाद्** अरोगित्वात्। **अन्यः कश्चिन्न मनुष्ये गुणः** इत्यन्वयः। **भद्रं** कल्याणम् तेन तथारोगित्वादिति भावः॥ (६६) **अव्याधिजं** मोहजत्वात्। **कटुकं** मरीचादिवद् दाहकत्वात्। **शीर्षरोगं** शिरोव्यथाहेतुत्वात्। **पापानुबन्धम्** पापहेतुत्वात्। **परुषम्** असह्यत्वात्। **तीक्ष्णं** शरीरेन्द्रियमनोभेदकत्वात्। **उष्णं**[8] तापकत्वात्। **पिब** संहरेति यावत्। **प्रशाम्य** निवर्तस्व॥ (६७) **आद्रियन्ते न वै, न वै विषयेषु लभन्ते तत्त्वम्** इति काकाक्षिवदन्वयः। **तत्त्वं** विषयत्वम्॥ (६९) **बलं** सामर्थ्यम्। **मृदुना** मार्दवेन। **विरुध्यते** मार्दवं बाध्यते [ Fol. 34a ] इति यावत्। अथवा **तद्बलम्** एव न भवति **यन्मृदुना** पुरुषेण **विरुध्यते** विरोधं कुरुते। **मिश्रो** मार्दवक्रौर्याभ्यामिति शेषः। **प्रौढा** क्रूरा॥ (७१) [ **मे** ][9]**धीभूतः** खलस्तम्भीभूतो मर्यादाकारणात्॥

विदुरवाक्ये प्रजागरे॥

## ३७

(२) **इन्द्रस्य कार्मुकं**[10] मेघस्थम्। **मरीचिनः** सूर्यस्य। **पादान्** रश्मीन्॥ (३)

---

1 Ed. नृपते। 2 Ed. वोढुं। 3 Ed. नित्यं for अन्यत्। 4 Ed. पर्यायशः 5 Ed. सर्वे। 6 Ed. तन्तवः। 7 Ms. व्योम। 8 Ed. उग्रं। 9 Lacuna in Ms. Ed. मेढीभूतः। 10 Ed. हि धनुः।

**अशिष्यम्** अजिज्ञासुमिति यावत्। **अतिवेलम्** इति क्रियाद्वयेन सह संबध्यते। **स्त्रियं**[1] **च यो रक्षति** अशक्यत्वात् स्त्रीरक्षणस्य। स्वयं रक्षिता हि सत्यः[2]। **अयाच्यं** निर्धनं कृपणमदेयं वा॥ **कत्थते** स्वगुणान् वर्णयति॥ (४) **अकार्यम्** अकरणीयम्। **अश्रद्दधानाय** उक्तं नास्तीति मन्यमानाय। **अकामान्**[3] अकाम्यान् समुद्रतरणादीन्। आकामाम् इति पाठे तु अनिच्छन्तीं स्त्रियम्॥ (५) **वध्वा** वधूसंबन्धिनं **हासं मन्यते** न निषेधति। **वध्वा सह वसन्** दारव्यवहारं [Fol. 34b] कुर्वन्। **मानो** गौरवम्। **क्षेत्रे** दारेषु भूमौ वा। **बीजं** शुक्रं धान्यादि वा। **परिवदति**[4] निन्दति॥

**शतायुरुक्तः पुरुषः** (३७।८) इत्यादेः **कामक्रोधौ क्षयोदयौ** (४१।११) इत्यन्तस्य अस्मिन्नेव जन्मनि दृष्टं च हरन्त्यः प्रवृत्तयः सद्भिर्वर्जनीयास्तद्भेतवश्च करणीया इति तात्पर्यार्थः॥

(९) अतिक्रम्य गुरूनपि...स्त्वमिति वाक् **अतिवादः**। सर्वापेक्षया स्वस्मिन् गुणारोपणम् **अतिमानः**। **अत्यागो** दानकालेऽप्यदानम्। अत्याशः इति पाठे अत्याशा अ...नम्। **क्रोधः** अपकर्तरि हन्तव्य इति भावः। परेणाकृष्टस्तत्प्रतिक्रियेच्छा **अनुविधित्सा**[5]॥ (११) **विश्वस्तस्य** ममायं भार्यां रक्षिष्यतीति प्रतीतस्य कृतप्रत्ययस्य। **तल्प**[6] शब्देनात्र तत्स्था[7] स्त्री लक्ष्यते। **वृषली** द्विजस्य प्रथमोढा शूद्रा। **पानं** सुरा। प्रतीकमुच्चार्य तच्छेषपाठार्थः॥(२२३*) आदेश[Fol. 35a]कारी **आदेशकृत्**। **वृत्तिहन्ता** जीवनच्छेदकः॥ (१२) **समेत्य** सङ्गं कृत्वा (१३)**वदान्यो** दानशीलः। **अनपविद्धवाक्यः** परवचनमनाक्षिपन्। पितृदेवमनुष्योपभुक्तादन्यद् **अन्नं शेषम्**॥ (१८) **प्रातिपेय**[8] प्रतीपकुलसंभव॥ (१९) **गूहमानो** रक्षन्॥ (२०) **भक्तस्य** सेवमानस्य। **हिते** आदिमध्यान्तेऽनुकूले **रतस्य** स्वभावप्रवृत्तस्य॥ (२१) **संजिघृक्षेत्** संग्रहीतुमिच्छेत्। **उचितमवरुद्धं** येषाम्॥ (२२) **कृत्यानि** कोशरक्षणादीनि। **पूर्वं** सेवारम्भकाले। **परि** वर्जने। **सं** सम्यक्त्वे **ख्या** प्रकथने। इदं त्वया करणीयमिदं च न करणीयमिति प्रकथ्य। **आयव्ययौ परिसंख्याय** इत्यन्वयः। **अनुरूपां** सेवकजात्याद्युचिताम्॥ (२३) **अतन्द्रीः** अनलसः॥ (२४) **नाद्रियते** न श्रद्धत्ते। **प्रत्याह** निराकरोति॥ (२५) **अस्तब्धम्** अगर्वम्। **अक्लीबम्** अकातरम्। **अदीर्घसूत्रं** क्षिप्रकारिणम्। **सानुक्रो**[Fol. 35b]**शं** सकृपम्। **श्लक्ष्णम्** अकर्कशम्। **अहार्यम्** अभेद्यम्। **अरोगिजातीयम्**[9] अरोगिकुलोत्पन्नम्। **उदारवाक्यम्** अदीनवचनम्॥ (२६) **विकाले** अनवसरे प्रदोषे। **राजकन्यां**[10] योषिन्मम भवेति **प्रार्थयेत**॥ (२७) **निह्नवं** स्नेहम्। **गतस्य** मिलितस्य। **सत्रगतस्य**[11] इति पाठे छद्मिनः। **संसृष्टः** शत्रुणा मिलितो **मन्त्रो** यस्य। **कुसंगतस्य** कुत्सितैः संगतस्य। **व्यपदेशं** व्याजम्। अन्यस्मिन् चिकीर्षितेऽन्यद्ब्रूयात् तच्च **सकारण**मित्यर्थः॥ (२८) **घृणी** करुणावान्। स हि करुणाकृतैर्दानैर्निर्धनः। **राजा** च कथंचिद्वसरलाभेऽपि करे प्रपातनं कुर्यात्। **पुंश्चली** प्रार्थ्य-

1 Ed. स्त्रियः। 2 Arj. reads सान्व्यः while reproducing the line. 3 Ed. अकाम्यं। 4 Ed. परिवदते। 5 Ed. अतिविवित्सा। 6 Ms. तस्य (corrupt). 7 Ms. तात्स्थ्या। 8 Ed. प्रतिपीय। 9 Ed. अरोग°। 10 Ed. न राजन्यां योषितं प्रार्थयेत। 11 Apparently, Devabodha reads (as in Arj.) मन्त्रगतस्य, noting also this variant.

माना त्वयाहं भुक्तेति ब्रूयात् । **राजभृत्यो** बलं कुर्यात् । पुत्रभ्रात्रोर्धनस्वामित्वाद् · **बालपुत्राया** ध[नह][1]रणादिना पीडयितुमयोग्यत्वात् । **सेनाजीविनो** राजदण्डसंभवात् । **उद्धृत**[ Fol. 36a ]...**स्य**[2] ग्रासमात्रलाभेन धनाभावात् । **व्यवहारे** अर्थसंबन्धे योने वा ॥ ( २९ ) **बलम्** आप्यायनेन । **रूपं** मलक्षालनेन । **स्वर** उदात्तादिः षड्जादि[श्र...][3]कं वादीन्यक्षराणि । तेषां **प्रशुद्धिः** तदभिव्यंजकस्थानानां स्नानेन परिपोषात् । **स्पर्शगन्धौ** मृदुसुरभी । ( ३० ) **मितभक्तं**[4] परिमितान्नम् । **आयुर्दे...**स्थिते लिङ्गशरीरेण कालसंयोगः । **अनाविलम्** अमलिनम् । **आद्यूनो** बहुभुक् ॥ ( ३१ ) **द्विष्टं** द्वेषविषयीकृतम् । **अनिष्टवेषं** शिष्टजने न ॥ **वराकसंभूतम्** उत्तरोत्तरहानिभाजम् **अमान्यमानिनं** नीचप्रियम् । **निष्ठुरिणं** कठोरम् । **दृढवैरं**[5] कालेनाप्यगलितवैरम् ॥ ( ३३ ) **संश्लिष्टकर्माणं**[6] हीनम् । **अतिप्रवादं** बहुभाषिणम् । **निकृष्टरागं**[7] रागान्धम् ॥ ( ३४ ) **बन्धनं** कारणम् ॥ ( ३६ ) **हितं** परिणतिसुखम् । **ईश्वरो** हिताहितकारणसमर्थोऽपि हितमेव **कुर्यात्** । हि यस्मात् **मूलं** [ Fol. 36b ] कारणम् **एतत्** ॥ ( ३७ ) **बुद्धिः** परिच्छेदरूपा । **प्रभावः** कोशदण्डकृता पराभिभवशक्तिः । **तेजो** जिगीषा । **सत्त्वं** संभ्रमेऽप्यवैकल्यं मनसः । **उत्थानम्** उद्योगः । **व्यवसायः** स्थैर्यम् ॥ ( ३९ ) **श्वेतग्रहः**[8] शुक्रः केतुर्वा ॥ ( ४१ ) **नीनशो** नाशय ॥ ( ४७ ) **वेगम्** अतिशयविशेषम् ॥ ( ५४ ) **आथर्वणाः** प्रत्यङ्गिरा मन्त्राः । **अगदाः** औषधयोगाः ॥ ( ५६ ) **उद्दीप्यते**[9] घर्षणादिना ॥ ( ५९ ) **शाला** वृक्षाः ॥

## ३८

( १ ) **आयति** आगच्छति ॥ ( २ ) **परिनिर्णिज्य** प्रक्षाल्य । **आत्मसंस्थं सुखं प्रवेद्य**[10] बोधयित्वा ॥ ( ४ ) चिकित्सकस्य धनग्र...मारणसंभवात् । **शल्यकर्ता** काण्डकारः । **अवकीर्णा** क्षतव्रतः । सेनाधिकारेण[11] हिंसाबहुलेन विहितजीवनत्वात् । **वेद**[12]**विक्रायको** मूल्यं गृहीत्वाध्यापकः ॥ ( ६ ) **उदासीनो** रागद्वेषमध्यस्थः । **वेति**[13] वाक्यालंकारे ॥ ( ७ ) **नीवारः** तृणधान्यम् । **मूलं** कन्दः । **अचोद्यः** अप्रेर्यः, स्वयं प्रवृत्तत्वात् ॥ [ Fol. 37a ] **बाहू** च बाहू बुद्धिरेव ॥ ( १० ) **अनीर्षुः** परगुणसहिष्णुः । **संविभागी** विभज्यभुक् । **श्लक्ष्णः** अकर्कशः ॥ ( ११ ) **दीतय** उद्योतकत्वात् ॥ ( १४ ) **निराकारा** निर्गतव्यञ्जनाकाराः । **शेरते** इति वाचापि न प्रकाशयन्तीत्यर्थः ॥ ( १६ ) **दर्शयेत्** प्रत्यक्षीकुर्यात् । तदपि वचसा न कुर्यात्, वचसा प्रकाशनस्य लघुताहेतुत्वात् ॥ ( १७ ) **निःशलाके** निर्जने, यत्रान्तर्धातुं शलाकापि नास्ति ॥ ( १८ ) **अनात्मवान्** अवश्यमनाः ॥ ( २२ ) **स्थानं** वृद्धिह्रासहीनतया तदवस्थता । **षाड्गुण्यं** संधिप्रभृतयो गुणाः । **अनवज्ञातशीलस्य** सुशीलस्य ॥ ( २३ ) **अवन्ध्यौ**[14] सफलौ ।

1 Dropped in Ms. and supplied from Arj. 2 For the lacuna, read भक्त । 3 Arj. reproducing, reads for the lacuna, वर्णः अकारा । 4 Ed. मितभुक्तं । 5 Ed. कृतवैरं । 6 Ed. संक्लिष्टः । 7 Ed. विकृष्टः । 8 Ed. श्वेतो ग्रहः । 9 Ed. दीप्यते । 10 Ed. प्रतिवेद्य । 11 This apparently explains सेनाजीवी । 12 Ed. श्रुति । 13 Ed omits. 14 Ed. अमोघ° ।

आत्मप्रत्ययकोशस्य स्वयंविदितभाण्डागारस्य । **वसुधैव वसुदा** वसु प्रयच्छति ( २४ ) **नाममात्रेण** स्वल्पेनापि, अथवा अहं राजेति नाम्नैव **तुष्येत । छत्रं** राजचिह्नोपलक्षणम् ॥ (२५) **ब्राह्मणं वेद** तत्क्रियाभिज्ञत्वात् । **भर्ता**...[Fol. 37b][1] रहश्चरिताभिज्ञत्वात् ॥ (२७) **दैवतेषु** प्रत्ययाप्रसङ्गात् । **राजसु** वधप्रसङ्गात् । **ब्राह्मणादिषु**[2] वाक्पारुष्यप्रत्यवायप्रसङ्गात् । ( २८ ) **न चानर्थेन यु[ज्यते]**[3] **कीर्तिं लभते** इत्यस्माद्द्वितीयो नकारोऽनुवर्तनीयः । तेनानर्थं लभत एवेत्यन्वयः ॥ ( ३० ) बुद्धेरन्वयव्यतिरेकौ संपत्तदभावयोरकारणात् तर्हि कारणमन्यदाह —**लोकपर्यायवृत्तान्तम्** इति । लोक्यते प्राप्यत इति सुखदुःखप्राप्तिपरिहारलक्षणं फलं लोकः । परि सर्वतो...त्वम् । तस्यायनमागमनम् आयः । तत्र वृत्तः अन्तो निर्णयः कारणतया यस्य । तत्प्राक्तनं कर्म दैवशब्दाभिधेयम् ॥ ( ३१ )...ते[4] किमेतैः सिध्य[तीति][5] **अवमन्यते** विद्यादिगुणसंपदा सूचितां दैवसंपदम् । तेषु गूढो न वेत्तीति भावः ॥ ( ३२ ) **अनर्था** वधबन्धादयः ॥ ( ३३ ) **अविसंवादनम्** अवञ्चनम् । **दानम्** [ Fol. 38a ] अभयदानं धनदानं वा । **समयस्य** मर्यादायाः । **अव्यतिक्रमः** अलङ्घनम् । **आवर्तयति**[6] अभिमुखीकरोति । **सम्यक्** मधुराहितभावेन । **प्रणिहिता** प्रयुक्ता ॥ ( ३४ ) **परिवारणं** सर्वतो वारणीयताम्, संश्रयणीयतामिति यावत् ॥ ( ३५ ) **समिधः** संदीपकानि ॥ ( ३६ ) **असंविभागी** मृष्टं फलाद्येकाकी भुञ्जानः ॥ ( ३७ ) **कोपयति** दोषारोपणेन ॥ ( ३८ ) **दुष्टेषु** क्रोधलक्षणेन दोषेण ॥ ( ३९ ) **समासक्ता** निक्षिप्ताः **प्रथमोत्पतितेषु** तत्क्षणेनाढ्यतां गतेषु । **अनार्या** अकुलीनाः ॥ ( ४० ) **यत्र** देशेषु । **अवशैः** स्वपराधीनैरप्रतिष्ठितैः **आदेशा** आज्ञा येषु । अथवा **अवशा** अनधिष्ठिता **देशा** मण्डलानि ॥ ( ४१ ) **प्रयोजनेषु** कर्तव्यमात्रेषु । **सक्ताः** तत्पराः । **विशेषेषु** अवान्तरभेदेषु । एकविशेषसक्तस्य विशेषान्तरप्राप्तेरभावात् । सामान्यनिष्ठस्य [ Fol. 38b ] सामान्ये सर्वे विशेषाः सिध्यन्ति । तत्र हेतुः—**विशेषा हि** इति । **हि** यस्मात् **प्रसङ्गिनः** सामान्यसिध्यैव सिद्धिभाजः ॥ ( ४२ ) **कितवा** द्यूतकर्मणि कौशलातिशयात् । **चारणा** अपात्रे धनव्ययातिशयात् । **बन्धक्यः** कर्मप्रसङ्गातिशयात् । एवंविधस्य जीवनमजीवनमेवेति भावः ॥

## ३९

( १ ) **भवाभवे** उत्पत्तिविनाशे । **दारुमयैव**[7] **योषा** सूत्रसंचारवशा । **दिष्टस्य** आदिष्टस्य । **श्रवणे** आकर्णनमात्रे, न तु क्रियायाम् ॥ ( २ ) **बुध्यवज्ञानं** मूर्खता ॥ ( ३ ) अनैसर्गिकप्रियत्वे उपाधीनाह—**प्रियो भवति** इति । **मूलं** वशीकरणभेषजम् । **यः प्रियः** स्वभावादिति शेषः । **एव**-शब्दः प्रियत्वप्रच्युतिं व्यवच्छिनत्ति ॥ ( ४ ) **साधुः** कुशलकर्मा । **मेधावी** उपकारान् स्मरन् । **पण्डितो** हिताहितविवेचकः । **प्रिये शुभानि द्वेष्ये पापानि** कुर्यादिति दोषः । ...... [ Fol. 39 missing ]

[ Fol. 40a ] ( Passage in App. I, no. i ) **तद्यो नाचरति** स वर्धते । **पापं**

---

1 For the lacuna, read with Arj. वेद । 2 Ed. ब्राह्मणेषु च । 3 Lacuna in Ms. 4 For the lacuna, Arj. reads क एते । 5 So Arj. for the lacuna. 6 Ed. आवर्तयन्ति । 7 Ed. दारुमयीव ।

प्रतिकूलम्। **पूर्वकृतं** यत्नेनापि **असम्यगुपयुक्तत्वात्** **अविदितमेवेति** विध्यर्थः। ततः सेवके सेव्येन सेव्ये वा सेवकेन **अविमृश्य** अपर्यालोच्य अनुवर्तते पुनः सेवते। सोऽन्यकृतापराधेऽन्वयोऽक्षत इति तेन सेव्येन पात्यते॥ **संततिः** संघटनम्। **मदं** सुराप्रभवम्। **स्वप्नं** कदाचिन्मन्त्रस्य प्रलापेन श्रावणात्। **अवज्ञानं** मन्त्रसहकारिणाम्। **आकारं** मन्त्रव्यञ्जकभ्रूक्षेपादिकम्। **विश्रम्भं** विश्वासम्। **अधितिष्ठति** उपरि वर्तते॥ **श्रुतं** शास्त्रम्॥ **अनात्मनि** मूढे॥ **जात्या** उत्तमाधममध्यमया। मत्येति पाठे संकल्पविकल्पव्यापारेण मनसा। **बुध्या** व्यवसायव्यापारया। **संपाद्य** एवमयमिति निश्चित्य। **श्रुत्वा** आप्तेभ्यो गुणागुणानिति शेषः। **दृष्ट्वा** प्रत्यक्षीकृत्य। **विज्ञाय** [ Fol. 40b ]...धूतया वचनचेष्टाभिः॥

( ३२ ) **अवृत्तिं** वर्तनाभावम्॥ ( ३३ ) **परिच्छदेन** परिवारेण। **क्षेत्रेण** देशेन। **वेश्मना** गोमयोपलेपशुचिमा......। [ **परिचर्य** ][1]**या** सेवया॥ ( ३३५* ) **प्राज्ञः** पण्डितः **वैद्यं** वेदेन व्यवहरन्तम्। **सुवाचं** ( Ed. सुवाक्यं ) सत्यपाटवमाधुर्यादिवाग्धर्मोपपन्नम्॥ ( ३४ ) **नैभृतं** निश्चलता। ( ३६ ) **अवलिप्तेषु** अहंका[रिषु][1]। **रौद्राः** कोपनाः। **साहसिका** अविमृश्यकारिणः॥ ( ३७ ) **अत्यागि** आपद्यपि अत्यजनशीलम्॥ ( ३८ ) **अनुत्सर्गः** अप्रेरणम्। **न विशिष्यते** इन्द्रियाप्रेरणे मृत्यौ च शब्दादीनां विषयाणामग्रहणसामर्थ्यात्। **अत्यर्थं** रागातिशयेन प्रेरणातिशयः॥ ( ४० ) **अपनीतम्** अनयादपगतम्। **सुनीतेन**...... नयनीत्या॥ ( ४१ ) **आयत्याम्** उत्तरकाले **प्रतिकारज्ञो** विघ्ननिवारणोपायदर्शी। **तदात्वे** कार्यारम्भकाले कर्तव्यमेवेति **दृढनिश्चयः**। [ Fol. 41a ] **अतीते** निष्पन्ने **कार्यशेषज्ञः** अस्मिन् कृते इदं भविष्यतीति जानन्॥ ( ४२ ) **अभीक्ष्णं** पुनः पुनः। **अपहरति** तन्मयतया क्रियान्तरान्निवर्तयति॥ ( ४३ ) **मङ्गलालभनं** दध्यक्षतादिवन्दनम्। **योग** उपायज्ञता। **श्रुतं** नीतिशास्त्राणाम्। **उत्थानम्** उद्योगः। **आर्जवं** शिष्टानुमतेन पथा गमनम्॥ ( ४४ ) **अनिर्वेदः** प्रारब्धकार्यपरता। **महान्** महाफलभाजनम्॥ ( ४५ ) **प्रवृभिष्णौ**[2] समर्थे। **क्षमा** आक्रोशादिप्रतीकारबुध्यनुत्पादः। **सर्वत्र** दुर्बले बलवति च॥ ( ४६ ) क्षमा-शब्दार्थं निरूपयति। **अर्थे** यथा प्रतीकारबुध्यनुत्पादस्तथा **अनर्थे** आक्रोशनादावपीति समभावद्व्रतम्।......। किं सुखेनेति...ग्रहः॥ ( ४९ ) **सव्यपत्रपं** सलज्जम्॥ ( ५० ) **अत्यार्यम्** अतिपण्डितम्। मामयं विचारेणासारां करिष्यतीति कथमस्मात्पापादन्यदागमिष्यतीति च। अति[ Fol. 41b ]...[3] दानेन मां तुच्छां करिष्यतीति। **अतिशूरं** पतितेऽस्मिन्निराश्रया स्यामिति। **अतिव्रतं** निरुपभोगा स्यामिति। **प्रज्ञाभिमानिनं** दुर्ज्ञानेन...[4] ष्यतीति॥ ( ५३ ) **कान्तारे** दुर्गमे पथि। **संभ्रमे** व्याघ्रसर्पाद्याहितायां त्वरायाम्। **शेषवताम्** आयुःशेषवताम्। [ **भयं** ][5] मरणम्॥ ( ५४ ) **संयमः** अतिव्यया[त्... ] रक्षणम्। **भवस्य** विभूतेः॥ ( ५५ ) **ब्रह्म** वेदः ( ५६ ) आपत्पतितस्य व्रतिनः षडेतानि भुक्तानि कृतानि च व्रतघ्नानि। मूलफलपयसामेकवर्गीकरणा[ देव ][6] षट्संख्या। **हविः** हुतशेषः। **काम्या** इच्छा॥ ( ५७ ) **संदध्यात्** संयोजयेत्। **संग्रहेण** संक्षेपेण॥ ( ५८ ) क्रोधादयः शब्दाः कर्तरि भावे च योजनीयाः॥

---

1 Lacuna in Ms. 2 Ed. प्रभविष्णोः। 3 For the lacuna, read ( with Arj. ) दातार° ( Pratika ). 4 Arj. reads, for the lacuna, नाशयि. 5 Lacuna in Ms. supplied from Arj. 6 Lacuna supplied from Arj.

(५९) **स्त्रीधूर्तके** स्त्रियां धूर्ते च। अथवा कुट्टने। स्त्री चञ्चलत्वात्। धूर्तको वञ्चकत्वात्। कुट्टनो द्रव्यलोभात्। **अलसे** अननुष्ठानात्। **भीरौ** भयात्। **चण्डे** क्रो[Fol. 42a]धात्। **पुरुषमानिनि** गर्वात्। **चौरे** अनृतमयत्वात्। **कृतघ्ने** उपकृतनाशकत्वात्। **नास्तिके** अधार्मिकत्वात्। भङ्गसंभवाद् **विश्वासो न कर्तव्यः** ॥ (३३९*) **वाहीकाः** टक्कदेशोद्भवी ब्राह्मणाः, दास्यामि दास्यामीति लोभयित्वा अदातारो वा ॥ (६४) **विप्रवासो** भर्तारं विहाय स्थितिः ॥ (६५) **त्रपु** रङ्गम् ॥ (६६) **स्वप्नेन** निद्रासेवया। **कामेन** उपभोगेन ॥ (६९) **अलं** पर्याप्तये, आकाङ्क्षानिवृत्तये इति यावत् ॥

४०

(१) **असज्जमानो** अविलम्बमानः। **शक्तिमहापयित्वा** शक्तेर्धनादिरूपायाः संकोचमकृत्वा। तं[1] दातारं **यशः समुपैति**। **प्रपन्नस्य**[2] भक्तस्य यशःप्रभृतिसुखहेतवे **अलं** समर्थाः **सन्त** इत्यर्थान्तरन्यासः ॥ (२) **अनुपाकृष्टः** अनिन्दितः ॥ (३) **समुत्कर्षे** गुणानामतिशये। **अनृतं** तदपहारी मिथ्यावादः। **पैशुनं** पिशुनस्य कर्म ॥ [Fol. 42b] [**गुरोः**][3] पित्रादेः **अलीकस्य** मिथ्याचरितस्य **निर्बन्धः** प्रकाशनोद्यमः ॥ (४) **असूया** दोषारोपो गुणेष्वपि, तस्य **एकमेव पदम्**। **मृत्युः** लिङ्गसाक्षिकदेहयोर्वियोगः। **अतिवादो** बहुभाषणं निन्दा वा। **अशुश्रूषा** श्रोतुमनिच्छा गुरोरपरिचर्या वा। **त्वरा** बहुकालज्ञेयस्य स्वल्पेन कालेन ज्ञातुमिच्छा। **श्लाघा** स्वगुणकीर्तनम् ॥ (७) **आशा** लोभो धैर्याच्च्यावयति। **समृद्धिम्** अणिमादिविभूतिम्। **अन्तकः** अन्तरान्ता। अथवा **समृद्धिं** श्रियम् **अन्तको** यमस्तद्भोक्तृनयनद्वारेण **हन्ति**। **कदर्यता** दानभोगयोरभावः ॥ (८) **रथो** वाहनोपलक्षणम्। **मध्वाकर्षः** क्षौद्रग्रहीता। **शकुनि** विषपरीक्षकश्चकोरादिः पक्षी। **श्रोत्रियो** जन्मसंस्कारविद्यासंपन्नः। **वृद्धो** ज्ञानवृद्धः। **अवसन्नो** धनहीनः ॥ (९) **अजोक्षा** छागः। **विषं** [Fol. 43a]... । **औदुम्बरं** ताम्रम् ॥ (१०) धने साधूनि **धन्यानि** ॥ (११) **सर्वपरं** सर्वेभ्य उत्कृष्टम् ॥ (१२) **नित्यो धर्मः** परंपरया नित्यमोक्षप्राप्तिहेतुत्वात्। **जीवः** क्षेत्रज्ञः। **धातुः** शरीरं श्लेष्मादिधात्वारब्धत्वात्। **अनित्यान्**[4] सुखदुःखदेहादीन्। **प्रतितिष्ठस्व** एकाग्रीभव। **नित्ये** क्षेत्रज्ञे। **संतुष्य** संतोषं कुरु। लब्ध्वा क्षेत्रज्ञादन्यत्रालंबुद्धिं कुरुष्वेत्यर्थः। तोषश्चासौ परश्चेति **तोषपरः**[5] ॥ (१७) लोक्यत इति **लोकः** देहः। **ऊर्ध्वं** प्राप्तुकामः[6] **अमुष्य** प्राप्तस्य देहस्य **अधः**[7] अर्वाक्। **महत्तमः** तत्त्वाज्ञानरूपम् **अन्धकारम्** इन्द्रियज्ञानविरहरूपम्। **तत्** तत्त्वाज्ञानं **वै** प्रसिद्धम् **इन्द्रियाणां महामोहनम्** इति। [**प्रस**][8]**हेत्** अभिभवेत् ॥ (१८) **इदं वचो निशम्य प्रतिपत्तुं शक्ष्यसि** इत्यन्वयः ॥ (१९) **आत्मा** चिद्रूपो नदीव **नदी** तापनिवर्तकत्वात्। **पुण्यं तीर्थम्** अवतारमा[Fol. 43b]र्गोयस्याः। **सत्यमेव उदकं** यस्याः, पापक्षालनहेतुत्वात्। **धृतिः** अवसादविरोधी मनोधर्मः। सैव **कूलं** मनःप्रसरनिरोध-

1 Ms. सं (corrupt) 2 Ed. प्रसन्ना हि। 3 Lacuna supplied from Arj. 4 Ed. अनित्यं। 5 Ms., wrongly, दोषपरः। 6 Ms. reads (corrupt) पातकालः। 7 Ms. अधि। 8 Lacuna in Ms.

हेतुत्वात् । [ **दमो** य][1]थेष्टविनियोगयोग्यता मनसः । एष एव **उर्मिः** आत्मोल्लासरूपत्वात् **स्नातो** मग्नः । **पुण्यः** पापरागादिमलापेतो **नित्यं** स्वभावतः । [**अम्भोऽम्भ ए**]**व**[1] न स्वभावतस्तादृक् पावनम् ॥ ( २० ) **नदीं** चित्तनदीम् । **कामक्रोधग्राहवतीम्** इत्यात्मनि प्रवृत्तां वीतरागचित्तनदीं व्यावर्तयति । जन्मान्यपूर्वदेहेन्द्रियसमुदायाः[2] ॥ **सन्तर** लङ्घय ॥ ( २५ ) **काले** पर्वकाले । **त्रेता** अग्नित्रयी ॥ ( २७ ) **क्षात्राद्धर्मात्** पृथ्वीपालनात् । **तं** युधिष्ठिरम् ॥ ( ३० ) **दिष्टं** दैवम् ॥

## ४१

( ४ ) **प्रज्ञाशेषम्**[3] उक्तार्थदर्शिन्याः प्रज्ञायाः प्रज्ञान्तरम् ॥

प्रजागरः समाप्तः ॥

## ४२

**ततो राजा धृतराष्ट्रो मनीषी** ( ४२।१ ) इत्यादेः **पुष्करे निहितं विदुः** ( ४५।२८ ) इत्यन्तस्य सोपायश्च[ Fol. 44a ]तुर्थो वर्गस्तात्पर्यार्थः ॥

( १ ) धृतराष्ट्रः पाण्डवेभ्यः पुत्राणां युद्धान्मरणं पश्यन्नार्तः परममृतं पदं भगवन्तं सनत्सुजातं पृच्छति—**ततो राजा** इति ।

आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ Bha gīta

इत्यार्तस्याप्यधिकारोपदेशात् । **राजा** इति क्षत्रियताम् । **मनीषी** इति नित्यानित्यवस्तुविवेकिताम् । **महात्मा** इति रागादेरनाविलतया महति परमात्मनि आत्मा अन्तःकरणं प्रगुणं यस्येत्युपदेशयोग्यताम् । अधिकारिविशेषाणि प्रतिपादयति—**संपूज्य** इति । पूजनार्हां सर्वां वृत्तिमुपलक्षयति । **सनत्सुजातं** सनत् सनातनं सुजातं कुमारम् । **रहिते** एकान्ते । **बुभूषन्** स्वरूपेण भवितुमिच्छन् ॥ ( २ ) **मृत्युर्नास्तीति तव वादः**[4] पक्षः । मृत्युरस्ति स च ब्रह्मचर्येण प्रतिकरणीय इति देवासुराणां पक्षः । इति वादिविप्रतिपत्त्या [ Fol. 44b ] संदेहात्पृच्छति—**कतरद्** इति । **नु** वितर्के । अस्तीति वा नास्तीति सत्यमिति प्रश्नार्थः । ब्रह्मणे ब्रह्मप्राप्तये चर्यत इति **ब्रह्मचर्यम्** । तच्चात्रैव वक्ष्यते ॥ ( ३ ) उत्तरं दातुं प्रश्नमनुवदति–**अपृच्छः**[5] इति । **कर्मणा** ब्रह्मचर्येण यत्परमस्तीति वा सत्यमिति प्रश्नार्थः । ब्रह्मणे ब्रह्मप्राप्तये चर्यत इति... पक्षादन्यन्नास्तीति यावत् । **एतद्यथा** परमार्थं **शृणु** इत्यन्वयः । **मा विशङ्किथाः** मा विरुद्धं शङ्कस्व ॥ ( ४ ) उत्तरमाह–**उभे** इति । एतस्य प्रश्नस्य संबन्धिनी उभे संज्ञे । अस्तीति [ नास्तीति ][5] च । **क्षत्रिय** इति संबोधने । अस्तित्व[ नास्तित्व ][6]योरौपाधिकनैसर्गिकव्यव-

---

1 Lacuna in Ms. supplied from Arj. 2 Apparently this explains जन्मदुर्गाणि । 3 Ed. प्रज्ञाशेषः । 4 Ed. उपदेशं । 5 Ed. अमृत्युः । 6 Missing in Ms. but supplied from Arj.

स्थया विरोधं परिहरन्नाह—**मोहाद्**[1] इति । आत्मनश्चित्सदानन्दरूपत्वेन ज्ञानम्[2], ततो देहादिरूपतया विपरीतज्ञानं **मोहः** । ततो देहविच्छेदात्स्वोच्छेदभ्रमो मरणमित्यौपाधिको **मृत्युः** । **कवीनां** पण्डितानाम्, देवासुराणामिति यावत् । उपाधौ स्व[ Fol. 45a ]मतमाह—**प्रमादम्** इति । प्रमादो ब्रह्मज्ञानसाधनानां यमनियमादीनामननुष्ठानम् । **वै** प्रसिद्धौ । नैसर्गिकमाह—**अप्रमादं** ब्रह्मण्येकाग्रता । **सदा** यावज्जीवम् । **अमृतत्वं** मृत्योरभावम् । इत्युपाधिनिसर्गनिवेशितया मृत्योरभावभावयोरविरोधम् ॥ ( ५ ) **पराभवन्** मृताः । **ब्रह्मभूता** ब्रह्मप्राप्ताः । मृत्योरशरीरत्वं सप्रमाणकमाह—**न वै मृत्युः** इति । **व्याघ्र इव** शरीरी । यदि शरीरी स्याद् व्याघ्रस्येव मृत्योरपि रूपमुपलभ्येत । तस्मादनुपलब्धेरेव प्रमाणाभावः । हि-शब्दोऽनुपलब्धेः सर्वजनप्रसिद्धतां द्योतयति ॥ ( ६ ) पक्षान्तरमाह—**यमम्** इति । **अतो** मोहप्रमादाभ्यामन्यं **यमं मृत्युमेके** पौराणिकाः [ **आहुः** ] । यथा सावित्र्युपाख्याने ( ३।२८१।१६ )

अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्

इति । अमृतं तु तेषा[ Fol. 45b ]मपि तदेव संमतमित्याह—**आत्मेति** । **वसन्**[3] बुद्धौ सदा वर्तमानः । **अमृतं** तदेव **ब्रह्मचर्यम्** । बुद्धौ परिवृत्तेरेव ब्रह्मप्राप्त्यर्थचर्यारूपत्वात् । यमस्य मृत्योर्व्यापारमाह—**पितृलोके** इति । **शिवानां** शान्तानां **शिवः** कल्याणकारी, **अशिवानां** क्रूराणां **अशिवो** निग्रहकारी ॥ ( ७ ) **अस्य**[4] यमस्य **आदेशाद्**[4] आज्ञातः **निःसरते** अन्तःकरणादुद्भवति । **क्रोधो** हन्तव्यबुद्धिरूपः । **प्रमादः** आत्मन्यनवधानम् । **मोहो** मिथ्याज्ञानम् । क्रोधादिगृहीतानां गतिमाह—**ते मोहिता** इति । **इतो** देहात् **प्रेताः** प्रकर्षेण गता यथा पुनर्न विशन्तीमं देहम् । **तत्र** देहान्तरे । **पुनरि**ति प्रवाहस्याविच्छेदं सूचयति ॥ ( ८ ) देहान्तरप्रतिपत्तौ सहकारिणमाह—**तत** इति । **तं** गच्छन्तम् **अनु** पश्चात् । **देवा** इंद्रियाणि । उपलक्षणं चैतत्, [ Fol. 46a ] कर्माणि संस्काराश्चेति बोद्धव्यम् । विशेषेण **प्लवन्ते** गच्छन्ति । अथवा **देवा** ब्रह्मण्येकाग्रमनसस्त्रिदशा **अनुविप्लन्वते** उपहसन्ति । यमस्य मृत्युरूपमुपसंहरति—**अत** इति । **अतः** तदादेशात्प्रवृत्तेः । **मृत्युः** यमः । न केवलं क्रोधादिपरवशाः कर्मपरवशाः अपि ते इत्याह—**कर्मोदय** इति । **कर्मणां** कुशलाकुशलानाम् **उदये** जात्यायुर्लक्षणे विपाके । **तत्र** कर्मफले सुखदुःखलक्षणे । कामक्रोधाभ्याम् **अनुयान्ति** । अतः का[मक्रोधलक्ष]णं[5] **मृत्युं न तरन्ति** । **कर्मफलानुगा**[5] इति स्फुटार्थं पुनरुक्तिः ॥ ( ९ ) नन्वेवं कर्मफलपरवशस्य कदापि कामक्रोधात्मकमृ[त्युतरणं न स्या][6]द्विशेषहेतोरभावाद् इत्यत आह—**सो**[7]**ऽभिध्यायन्** इति । **स** एव गुरुप्रसादादधिगतात्मस्वरूपस्तदेव **अभिध्यायन्** विजातीयानन्त[ Fol. 46b ] [ रतत्प्रत्यय ][8]प्रवाहं कुर्वन् **उत्पतितान्**[9] उत्तरोत्तरोदितान् रागादीन् **निहन्यात्** । **अनादरेण** रागादिविषयाणां स्रक्चन्दनवनितादीनां दोषदर्शना[ दसंबुध्या **अप्र** ][10] **तिबुध्यमानो** निमित्तापायादेव नैमित्तिकापाय इति जानन्नौदासीन्यमवलम्बमानः । विषयगुणग्रहणं रागप्रवृत्तौ निमित्तम्, [ तस्मिन्निवृत्ते ][10]निवर्तत एव रागः, किमुपायान्तरेणेति भावः ।

1 Ed. मोहः । 2 Ms. अज्ञानं । 3 Ed. आत्मावसन्नं । 4 Ed. आस्यादेषः । 5 Ed. कर्मफलानुरागाः । 6 Lacuna in Ms. supplied from Arj. 7 Ed. यो । 8 Lacuna in Ms. supplied from Arj. 9 Ed. उत्पतिष्णून् । 10 Lacuna in Ms. supplied from Arj.

**मृत्यरिव** मृत्युकारणं व्याघ्रादिरिव । **एवं विद्वान्** उक्तेन प्रकारेण जानन् **यः** सं **का[मान् विनिहन्ति** ][1] । सोऽयं मृत्युतरणस्य विशेषहेतुः ॥ ( १० ) एवमुपायमभिधाय तद्व्यतिरेके मृत्व्यतिरेकव्यतिक्रममाह—**कामानुसारी** इति । काम्यन्त इति [कामा विषयाः । विषया][1]र्थायाः प्रवृत्तेर्नरकहेतुतामाह—**कामान्** इति । **कामान् व्युदस्य** विशिष्टबुध्या चित्ताग्रे क्षिप्त्वा, विषयानुद्दिश्ये[ Fol. 47a ]ति यावत् । **यत्किंचिद्रजो** यत्किंचित्कर्म, कार्ये कारणोपचारात् । **धुनुते** चालयति, प्रवर्तयतीति यावत् ॥ ( ११ ) तस्य फलमाह—**तम** इति । अविद्या **तमः**, अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिः । स एव **अप्रकाशः**, तत्त्वस्येति शेषः । **भूतानां** स्थावरजङ्गमानामयमेव **नरको** दुःखबहुलत्वात् । **प्रदृश्यते** प्रत्यक्षो नरक इत्यर्थः । **सुखं**[2] दुःखमेवारोपितसुखभावम् । **धावन्ति** वेगेन गच्छन्ति । तत्र दृष्टान्तः —**गच्छन्त इव श्वभ्रे** विले प[त]न्त इत्यर्थः । **गृह्यन्त इव** शत्रुभिर्गृह्यमाणा इवेति बाधासहस्रसंकुलत्वात्प्रत्यक्षनरकः ॥ ( १२ ) कर्मफलं कामादीनां मृत्यु......माह—**अभिध्येति** । **अभिध्या** विषयाणां गुणवत्तया चिन्तनम् । [ **हन्ति** ][3] आत्मतत्त्वात्प्रच्याव्य विषयप्रवणं करोति । अयमेव **प्रथम** [ Fol. 47b ]...[ तथा ][3] चिन्तिते रागं करोति । तत्परिपान्थिनि द्वे उपलक्षणं प्रवृत्तिनिवृत्ती इत्यग्रे धावति मृत्युपरंपरा । **बालान्** अज्ञानान् । धीरास्त[त्त्वदर्शिनः ...( १३ )...धानभूतान्मृत्यूनाह—**अमन्यमान** इति । **अमन्यमानः** अजानन् । विषयाद् **अन्यत्किंचिद्** अपि **नाधीयत** विषयव्यतिरिक्तात्म...... । तत्र **बाल**[4]दृष्टान्तेन भ्रान्तत्वम्, अश्मव्याघ्रदृष्टान्तेन चेतनाहीनत्वम् । **तच्छरीरे य एषः** क्रोधलोभ**मोहभयान्तरात्मा** प्रत्य......मृत्युरित्यन्वयः ॥ ( १४ ) मृत्युमुक्त्वा तत्परिहारोपायमाह—**एवम्** इति । **जायमानम्** उपचीयमानम् । **ज्ञाने** ज्ञानविषये पुरुषतत्त्वे **तिष्ठन्** एकाग्रे...**तस्य** ज्ञानस्य **विषये** आत्मनि **मृत्युर्विनश्यति**[5] । कालंजरो हि भगवानात्मा सर्वशास्त्रेषु श्रूयते । **विषयं प्राप्य यथा मर्त्यो** विनश्यति तथा आत्मा[ Fol 48a ]नं प्राप्य मृत्युरपि ॥ ( १५ ) मृत्युप्रस्थितेऽपि समाप्य धर्माधर्मप्रश्नमाह—**येऽस्मिन्** इति । **ये** चाल्पे **न धर्ममाचरन्ति**[6] तेषां **धर्मः पापेन हन्यते**[7] नो [ वेत्येकः प्रश्नः । .........इत्य ] परः प्रश्नः । अन्यथा वैयधिकरण्येन बाध्यबाधकशङ्कानुपपत्तेः ॥ ( १६ ) उत्तरम्—**उभयमेव** इति । **धर्मेण** प्रायश्चित्तरूपेण । **तस्य** प्रायश्चित्तरूपधर्मकारिणः । यदि पुनर्धर्माधर्मयोः स्वरूपेण बाध्यबाधकभावः स्यात्तदा कश्चित्सुख्येव स्यात् कश्चिद् दुःख्येव स्यात् । न चैवं देवानामपि दुःखलवोपलब्धेर्नारकिणामपि सुखलवोपलब्धेः ॥

( १७ ) धृतराष्ट्रः क्रमिकक्रियमाणानां कर्मणां क्रमेण फलभोगेऽभोगे च दोषं पश्यन्पृच्छति—**यानिमान्** इति । अस्य[8] ब्रह्मचर्यादेः **धर्मस्य** असाधारणस्य फलभूतान् **लोकान् सनातनान्** नित्यान् तत्र च **अन्यान्** अपरान् [ Fol. 48b ] **परिक्रमान्** आश्रमादाश्रमान्तरगमनानि **कथयन्त आहुः** इत्यन्वयः । तत्रेदं धृतराष्ट्रेण पृच्छ्यते—ये च ब्रह्मचर्याश्रमधर्मास्तेषां फलं य[दि भुज्यते] तदाश्रमान्तरधर्मवैयर्थ्यं सनातनत्वेन पूर्वाश्रमधर्मफलस्य उत्तरा-

---

1 Lacuna in Ms. supplied from Arj. 2 Ed. reads differently. 3 Lacuna in Ms. supplied from Arj. 4 Ed. तार्ण. । 5 Ed. विनश्यते । 6 Ed. धर्मान् । 7 Ed. प्रतिहन्यते । 8 Ed. स्वस्य ।

श्रमधर्मफलभोगावकाशाभावात् । अथ न भुज्यत इति पक्षं गृह्णाति–**नैतद्** इति । भुज्यत इति नेत्यर्थः । उत्तरमाह–**नैतत्कृतं च कर्म** । चकारेण फलवत्त्वं समुच्चित्य नकारेण निषेधति । अथ फलस्य न सनातनत्वं सनातनाँल्लोकानिति व्याघातः । **विद्वन्** इति संबोधने ॥ ( १८ ) उत्तरमाह–**येषाम्** इति । **बले** विद्याबले । पुनरपि **बले** तपोबले । **न विस्पर्धा** न विजिगीषा । **बलवतां** देवादीनामपि । अबलवतामिव इति पाठे येषां बले विद्यातपोरूपे बलवतामपि अबलवतामिव [ Fol. 49a ] बलेन बाहुबलेन विस्पर्धाधिगम इति व्याख्या । **ते ब्राह्मणा इतो** देहात् **प्रेत्य** मृत्वा **स्वर्गलोकस्य प्रकाशका** उद्योतयितारः । ए[तदु]क्तं भवति–क्रमेण कृतानामाश्रमधर्माणां स्वर्गे क्रमेणैव फलं भुज्यते । न च क्रमे सति सनातनत्वव्याघातः । चिरस्थायित्वाभिप्रायेण सनातनत्वोपपत्तेः । अथवा **स्वर्गलोकप्रकाशका** मोक्षिणः । मोक्षश्च सनातनः, चतुर्णामाश्रमाणां कर्मफलम् । तेन न कर्मणि क्रमो नाफल[1] इति न सनातनत्वविरोधः ॥ ( १९ ) मोक्षिणामन्नोपादानविधिमाह–**यत्र** इति । **यत्र** गृहे **भूयिष्ठं** बहुतरम् **अन्नपानम्**[2] **उलपं** बल्वजाः, **तद्** गृहं **जीवन्** जीवनमात्रार्थी **नानुसंज्वरेत्** न गतोऽहमिति संतापं न कुर्यात् । अन्नपानादौ रागं न कुर्यादिति भावः ॥ ( २० ) मुमु[ Fol. 49b ]क्षोः क्षमामाह–**यत्र** इति । **यत्र** दुर्जनकृताक्रोशताडनादिकर्मणि **अकथयमानस्य** वाचाप्यनिषेधतः । अप्रयतमानस्येति पाठे [प्रति][3]कारमनारभमाणस्य । **अशिवं** मरणरूपं **भयम्** । **अतिरिक्तं** बहुतरं **प्रयच्छन्ति**[4] न करोतीति धिया । इव-शब्दो वाक्यालंकारे । तत्र **अकुर्वन्** उदासीनो यः **स** क्षमी **श्रेयान्** । **नेतरे** अक्षमिणः । अथवा ये भयं प्रयच्छन्ति तेभ्य आत्मानमतिरिक्तमिवाकुर्वन् तेष्वप्यात्मनीव व्यवहरन् ॥ ( २१ ) यस्यान्नं भोक्तव्यं तन्निरूपयति–**यो वा** इति । **वा**-शब्दः प्रसिद्धिद्योतकः । **अकथयतो** विद्यागोत्रादिकमप्रकाशयतोऽपि भिक्षुकस्य **सह्यं** सहनीयम्, सुखपरिणाममिति यावत्, **अन्नं दत्त्वापि**[5] **नानुसंज्वरेद्** इति प्रसिद्धेः । **ब्रह्मस्व**मिति परस्वोपलक्षणार्थम् । **तदन्नं** तस्य दातुरन्नम् ॥ [ Fol. 50a ] ( २२ ) वेदं पठित्वान्नप्रार्थनं निषेधति–**यथा** इति । **स्वं** निजम् । **अभूतये** स्वपिण्डभरणेऽप्यनैश्वर्यप्रकारोपदर्शनाय । **स्ववीर्यस्य** स्वविद्याया उपजीवनात् ॥ ( २३ ) ब्राह्मणस्य मुमुक्षोश्चर्यामाह–**नित्यम्** इति । **इति**-शब्दाद् उक्तवक्ष्यमाणप्रकारावाह । ताभ्यां **मन्येत** जानीयात् **ब्राह्मणम्**[6] । **नित्यं** सदा **अज्ञातचर्येण**[7] अनुपलब्धेन चर्येण चरित्रेण ज्ञातिमध्ये निवसेत् । **हि**[8] यस्मात् **ज्ञातीनां मध्ये वसन्** कश्चिदेवान्तर्मुखः । ब्रह्मण इदं **ब्राह्मणं** ब्रह्मस्वरूपं **वेद** इत्यन्वयः ॥ ( २४ ) ब्राह्मणे वर्तमानम् **आत्मानं** स्वरूपं ब्राह्मणत्वमिति यावत् । **अन्तरम्** अविद्यमानभेदकचिह्नम् । न हि ब्राह्मणादिदेहे भेद[9]प्रतिपादकं लिङ्गं संज्ञादि[10] विद्यते । अज्ञातचरणस्य फलमाह–**तस्माद्** इति । **तस्माद्** अज्ञातचरणाद् **ब्रह्म पश्य[ति किं]** [ Fol. 50b ] **चित्** स्तोकम् । तदेव त्वभ्यासप्रकर्षाद् **आवसति** सर्वात्मनाधितिष्ठति ॥ ( २५ ) ब्राह्मणस्य करणीयमाह–**अश्रान्त** इति । **अश्रान्तः** अविरतः, आ[त्मन्ये]व[11] सदा प्रवृत्त इति यावत् । तत्र हेतुः–**अनादानाद्** विषया-

---

1 Ms. न फल (so Arj.)। 2 Ed. अन्नं पानं। 3 Lacuna in Ms. supplied from Arj. 4 Ed. प्रयच्छति। 5 Apparently Devabodha reads: यो वा कथयतो दत्त्वा सह्यान्नं। 6 Ed. ब्राह्मणः। 7 Ed. अज्ञातचर्या मे। 8 Ed. तु। 9 Ms. नेदं (corrupt)। 10 Ms. शज्ञादि (!) 11 Lacuna in Ms.

णामग्रहणात् । **संमतः** अद्वेष्यः । तत्र हेतुः–**निरुपस्करः**[1] निरुपरोधः । त्वमेवं कु[र्विति क][1]स्याप्यनुरोधं न कुर्यात् । कस्याप्यनुरोधे क्रियमाणे तच्छत्रवो द्वेषं कुर्युः । **शिष्टो** गुरुणोपदिष्टः । **अशिष्टः** अनुपदिष्टो यथात्मानमुपेक्षते तथा **न स्यात्** । **ब्राह्मणो** ब्रह्मज्ञानार्हः । **ब्रह्मविद्** ब्रह्मशास्त्रविहितात्मज्ञानवान् । **कविः** अध्यात्मशास्त्रवित् ॥ (२६) अपरिग्रहफलमाह–**अनाढ्या** इति । **अनाढ्या** निष्परिग्रहाः । **देवेषु**[2] द्योतनात्मकेषु पदेषु **आढ्या** आनन्देन ज्ञानेन च भवन्ति । **जग्मुषः**[3] जग्मिवांसः । [ Fol. 51a ] विभक्तिव्यत्ययात् ज्ञात्वा इत्यर्थः । न केवलमाढ्याः, **दुर्धर्षा दुष्प्रकम्प्याश्च** अनाधेयातिशयत्वेनापकारासंभवात् । **तां** पूर्वोक्तविशेषणां **ब्रह्मणस्तनुं विद्यात्** ॥ (२७) **सर्वस्विष्टिकृतः**[4] सर्वकर्तॄन् **देवान्** द्योतमानान् । यस्तु **य इह कश्चन** कोऽपि महत्त्वेन ख्यातः । स न **समानो** ज्ञानी...[5] । ब्रह्मणोऽयं स्वभावः, ब्रह्मैव वा **ब्राह्मणः** तस्य असाधारणं स्वरूपम् । प्रमाणं चाह–**तस्मिन्**[6] इति । **प्रयतते स्वयं** स्वयमेव भवति । केनाप्यकृतमित्यर्थः । प्रमाणपक्षे–**प्रयतते** प्रकाशते **स्वयम्**, स्वप्रकाश इत्यर्थः ॥ (२८) मानितो न गर्वं कुर्यादित्याह–**यम्** इति । **अप्रयतमानं** मानायेति शेषः । तथापि **मानयन्ति** जनाः । **मानितो** मन्यमान इति कालद्वयाभिधानेन सदा मान्यत्वं दर्शयति । **न मन्येत** नाभिमानं कुर्यात् । अ...[ Fol. 51b ] त्मनाभावात् । **नाभिसंज्वरेत्** संतापं न कुर्यात् ॥ (२९) मानयितृगुणात् न स्वगुणात्मानं जानीयादित्याह–**विद्वांस** इति । **मानयन्ति** इति विदुषां स्वभाव इत्यर्थः । **अधर्मविदुषो** धर्ममजानन्तः । **मूढा** मोहेन प्राप्ताः । **लोकशास्त्रं** दृष्टार्थं चाणक्यादि, लोकायतिकं वा । **न मानयिष्यन्ति** इति स्वभावोऽयमेषाम् । **उत**[7] विकल्पे ॥ (३०) अहंकारस्य मुनिभावस्य च परस्परविरोधो व्यक्त इत्याह–**न वै** इति । **मानः** अहंकारो **मौनं** मुनेर्भावः । **सहितौ** एककालम् । **समम्**[8] एककार्यम् । **अयं लोको** दृष्टं सुखम् । **असौ** परमानन्दः ॥ (३१) तदेव विवृणोति–**श्रीः** इति । **सुखस्येह** ऐहिकसुखस्य **श्रीः** लक्ष्मीः । **संवासो** निवासस्थानम् । **सा** श्रीः **परिपन्थिनी** मुनिभावस्येति शेषः । मौनमाह । **ब्राह्मी** ब्रह्मसुखलक्षणा । **सु** [ Fol. 52a ] **दु[र्लभा** ईषद्विकारे][9]ऽपि धर्तुमशक्या । **प्रज्ञाहीनेन** साक्षात्कारहीनेन ॥ (३२) तस्याः श्रियः कारणान्याह–**द्वाराणि** इति । **द्वाराणि** कारणानि । **मानः** अहंकारः । **मोहो** मिथ्याज्ञानम् ॥

## ४३

(१) वेदान् **यो वेद स पापानि कुर्वन् लिप्यते** नो वेति प्रश्नः ॥ (२) **अविचक्षणं**[10] धर्मशास्त्रेष्वपण्डितम् । एवं ह्याह[11]—

न वेदबलमाश्रित्य पापं कर्म समाचरेत् ।
अज्ञानाद्धि कृतं पापं वेदाभ्यासेन नश्यति ॥

---

1 Ed. निरुपद्रवः । 2 Ed. वेदेषु । 3 Ed. ये द्विजाः । 4 Ed. सर्वान् स्विष्टकृतः । 5 Ms. (here corrupt) नंदाभ्यं for the lacuna. 6 Ed. यस्मिन् । 7 Ed. इति । 8 Ed. सदा । 9 Lacuna in Ms. supplied from Arj. Cs सुदुर्धरा । 10 Ed. विचक्षणः । 11 Cf. Manu-saṃhitā, ed. N. S. P., Bombay 1909, xii. 101.

( ३ ) मायाविद्मपि मायामप्रयुञ्जानं **छन्दांसि तारयन्ति** तद्व्यवच्छेदार्थमाह— **मायया वर्तमानम्** इति ॥ ( ४ ) **प्रलापः** कोलाहलः ॥ ( ५ ) उत्तरमाह—**अस्मिन्** इति । **अस्मिन्** कर्मलोके तपःफलम् **अन्यत्र** [ लोकान्तरे ][1] । तदिदं मन्दसंवेगिनस्तपसः **फलम्** । तीव्रसंवेगिनस्तु फलम्—**इमे** प्रत्यक्षमनुभूयमाना लोक्यन्त इति **लोकाः** प्रीतिविशेषाः । [Fol. 52b] [ **ऋद्धे** तीव्रव्रत]मुपगते[1] तपसि **संयता** निबद्धाः ॥ ( ६ ) तीव्रसंवेगित्वकारणं पृच्छति—**कथम्** इति । **समृद्धमप्यृद्धं** तीव्रसंवेगीति यावत्*। अव्यृद्धमिति [ पाठे वि-]शब्दो[1] नञ्-पर्यायः । व्यृद्धम्[2] अनृद्धं न व्यृद्धम् अव्यृद्धं स एवार्थः ॥ ( ७ ) उत्तरमाह—**क्रोधादय** इत्यादिना **किं भूयः श्रोतुमिच्छसि** ( ४३।२२ ) इत्यन्तेन । द्वादश दोषानां त्रयोदश नृशंसानां निरोधे सति, सत्सु च द्वादशसु गुणेषु तदेव तपस्तीव्रं संवेगितं प्रतिपद्यत इति भावः । दोषनृशंससंज्ञाभ्यां हानं गम्यते । गुणसंज्ञया उपादानं गम्यते । **पितॄणाम्**[3] इत्युपलक्षणम्, पितृपितामहादिसंबन्धिनः सांतानिका इति यावत् ॥ ( ८ ) [ द्वादश दोषाना ][4]ह—**क्रोध** इति । **क्रोध** उच्छेदकर्तव्यतादृष्टिर्मनोदाहिका । **कामः** कथमिदं मे भूयादित्यभिलाषः [ Folios 53 and 54 missing ][5] [ Unnumbered Fol. a ] **लोभो** लब्ध्वा विनियोगे सति अधिकस्पृहा । **मोहो** मिथ्याज्ञानम् । **विधित्सा** इदमदः करिष्यामीति चिकित्सा । **विवित्सा** इति पाठे शास्त्रप्रतिप...त्यर्थे इदमेवं स्यान्न वेति विचारयितुमिच्छा । **कृपा** पुत्रादिषु सुखिनो भवन्त्विवति समीहा । **अभ्यसूया**[6] गुणे दोषग्रहणम् । **मानः** अहंकारः । [**शोकः**...] विच्छेदचिन्तया दुःखिता । अलब्धवाञ्छा **स्पृहा** । **ईर्ष्या** परगुणेन दुःखम् । **जुगुप्सा** निन्दा । **मनुष्यदोषा** मनुष्यजातिप्रतिबद्धाः । **नरेण** तपस्तीव्र...मिच्छता ॥ ( ९ ) मनुष्यदोषत्वे हेतुमाह—**एकैकः**[7] इति । एभ्यो द्वादशभ्यो मध्याद् **एकैकः** क्रोधादिः । **पर्युपास्त**[8] असेवत, भूतनिर्देशः प्रसिद्धिद्योतकः । ...य । **लिप्समानो** लब्धुमिच्छन् । **अन्तरं** छिद्रम् । तच्च विषयप्रवणत्वम् । शेषं स्पष्टम् ॥ ( १० ) त्रयोदशमध्यात् षडाह । **विकत्थनः** स्वगुणश्लाघी [Unnumbered Fol. b] [**स्पृहयालुः**] स्पृहाशीलः । स्पृहातस्ताच्छील्यं भेदकम् । **मनस्वी** निन्द्यमनाः । निन्दायां विन्-प्रत्ययविधानात् । **विभ्रत्कोपं** चिरक्रोधः । **चपलः** क्षण... । [**रक्ष**]**णो** दानविमुखः । **रूक्षण** इति पाठे वाचा परुषः । **प्राप्तान्**[9] मिलितान् । शेषेभ्यो द्वादशभ्यस्त्रयोदशसंख्या । नृशंस......गणमध्यात्पापकर्मगणतया पृथक्करोति—**षट्** इति । **सतः**[10] शिष्टान् । **सुदुर्गे** विषमापद्यपि न पापधर्मान् कुर्वीत । **उत** पक्षान्तरे । ...भ्रात्रेभ्य (?) शिष्टानां पक्षान्तरत्वात् ॥ ( ११ ) **संभोगः** स्त्रीसंभोगः **संधि** तपश्छिद्रं यस्य । **संविद्** इति पाठे संभोगे संविद् धीः[11] यस्य । विषमिव **विषं**[12] विषयजातम् **एधमानो** गुणारोपणतया वर्ध-

1 Lacuna in Ms. supplied from Arj. 2 Here two unnumbered folios intervene in the MS., for which see note below. 3 Ed. आततानाः । 4 Lacuna in Ms. supplied from Arj. 5 The matter, which follows, is given in two unnumbered folios, which are wrongly but continuously sandwiched between the word व्यृध्दं in 52b above and यत् in 55a below. 6 Ed. असूया । 7 Ed. एकैकं । 8 Ed. पर्युपासते । 9 The MS here reads, perhaps wrongly, प्राप्तानि मिलितानि । Ed. प्राप्ताः । 10 Ed. सन्तः । 11 Ms. सद्बुद्धिः (!) 12 Ed. द्विषं ।

यन् । अन्तर्भावितकारितार्थो......[ The following matter, which is relevant here, is given in misplaced fol. 13ab; see above p. 8, footnote ] [ Misplaced fol. 13a ] [ **दत्ता** ]**नुतापो** दत्तोऽनु पश्चात्तापो यस्य । **कृपणो** दानभोगहीनः । **बलीयान्**[1] बलेन हठेन व्यवहरन्, न नयेन । **वर्गप्रशंसी**......लक्ष्याधीः । **वनितासु द्वेष्टा** स्त्रीणां दोषानेव पश्यन् । **परे** षड्भ्योऽन्ये **सप्त** इति पौराणी गणविशेषप्रसिद्धिः । अर्थकृतस्तु [ विशेषः ] दोषगणनृशंसगणयोश्च स्वतापपरोपतापहेतुत्वेन[2] ॥ ( १२ ) द्वादशगुणानाह–**धर्म** इति । **धर्मो** विधिलक्षणार्थः । **सत्यं** वाच्याद्वालि...क्र । **दमो** ममताविषयादुपशमः । **तपः** कायेन्द्रियसंतापनो धर्मः । **अमात्सर्यं** परगुणेष्वाह्लादः । **ह्रीः** अकर्तव्यान्निवृत्तिः । **तितिक्षा** [ अहं ]कारबुद्ध्यनुत्पादः । **अनसूया** परगुणानां गुणत्वेनैव ग्रहणम् । **यज्ञा**[3] अग्निष्टोमादयः । **दानम्** अभयदानम् । **धृतिः** गुरूक्तेऽर्थेऽनुद्वेगः । [ **श्रुतं** ] वे[ Misplaced Fol. 13b ]दोपनिषदामिदं पर्यवधारणम् । **ब्राह्मणस्य** असाधारणानि ॥ ( १३ ) एतेषां गुणानां फलमाह । **एतेभ्यो** गुणेभ्यः **प्रवसेत्** विषयान्निवर्त[ ते **स सर्वां** ][4] पृथिवीं प्रशास्यापि यदि तिष्ठेत्, **नास्य स्वं** धनम् **अस्तीति वेदितव्यम्** । किं वक्तव्यं द्वादशभ्य इति **त्रिभिर्द्वाभ्यामेकतः** अपि । के ते त्रिप्रभृतयः...... । यद् इति व्याहृत्य तद् इति योजनीयम् । येभ्यस्तेभ्योऽपीत्यर्थः ॥ ( १४ ) त्रीनाह–**दम** इति । **त्यागो** दानम् । **प्रमादो** द्यूतम् । उपलक्षणं चित्त......कम् । अपरमपि त्रिकं त्रिकं ( ? ) बोद्धव्यम्[5] । **अमृतं** निर्वाणम् । एतेषां धर्मादीनां पुराणप्रसिद्धपरिभाषान्तरमाह—**तानि** इति । **सत्यमुखानि** इति [ द्वा ][6]दशानां परिभाषा ॥ ( १५ ) दमस्याङ्गानि द्वादश इति गुणोऽङ्गम् । अङ्गानां निवृत्तिरूपत्वात् । निवृत्तेश्च प्रतियोगिनिरूपनीयत्वात् प्रतियोगिन[7]मा[ ह–**प्र** ]**तिकूलम्**[8] इति । [ Fol. 55a ] **यत्सुकृतं** तच्च काम्यं दमविरोधि । **अकृतं**[9] दुष्कृतम् । **कामः** प्रीतिविशेषः । **अर्थः** अर्थार्थमारम्भः । **स्पृहा** सुखमात्रेऽभिलाषः ॥ ( १६–१७ ) **तृष्णा** पेयाभिलाषः । **लोभो** धनाभिलाषः इत्यपौनरुक्त्यम् । **अपस्मारो** मतिभ्रंशः । **अतिवादः** अविगृह्य वादः । एतेषामष्टादशानां दोषाणां विमुक्तिर्दमगुणाः । **तथा रतिः अरतिः** इति च पाठः । इति पाठद्वयेऽष्टादशत्वम् । **रतिः** विषये, अरतिः आत्मनि । ( १८ ) त्यागभेदानाह–**श्रेयान्** इति । **नु**[10]-शब्दोऽवधारणार्थः । प्रकारान्तराणां त्यागाभासत्वात् । **न हृष्यति** इति रागत्यागः । **व्यथां न चार्च्छति** इति द्वेषत्यागः । इति त्यागद्वयम् ॥ ( १९ ) अप्रदेयमपि याच्यमानाय प्रतिनिधिमकृत्वा तदेव देयमित्याह–**इष्टान्** इति । **अहितं**[11] दातुर्दुःखकरं यथा भवति तथा **याच्यमानाय प्रदेयं तद्वचो भवेद्** इत्यन्वयः । [Fol. 55b] **तद्वचः** तस्य याचकस्य वचः । **वचः** शब्देनात्र तदर्थो देयोऽर्थो ग्राह्यः, विषये विषयिन उपचारात् । याचितमवश्यं देयामिति

1 Ed. अबलीयान् । 2 Ms. is corrupt here and reads : अर्थकृतस्तु ते दोदोषाशंसगणयोश्च तापपरोपतापत्वे परोपतापहेतुत्वेन । 3 Ed. यज्ञः । 4 Lacuna in Ms. supplied from Arj. 5 The line in perhaps corrupt; it should be read अपरमपि द्विकमेकं स्वयं बोद्धव्यम् ? । 6 Lacuna in Ms. 7 The Ms. is corrupt here and reads : °निरूपणीयत्वात्बतियोनि । 8 Lacuna in Ms. 9 Ed. कृताकृते । 10 Ed. तु । 11 Ed. अर्हते ।

यावत् । **अन्यो**[1] याचितप्रतिनिधिरूपो नैव प्रदेयः । स एव याचको यद् **अवाच्यमपि वदति** तत्रापि तद्वचो भवेत्, **न** याचकीया...[प्रति]षेधकं स्ववचस्त्याज्यमित्यर्थः । एष त्यागत्य **तृतीयो गुणः** प्रकारः ॥ (२०) चतुर्थप्रकारमाह–**त्यक्तैः** इति । **द्रव्यैस्त्यक्तैर्यः** त्यागो **भवति** स चतुर्थस्त्यागः । पूर्वे त्यागा रागादित्यागरूपा, अयं तु द्रव्यत्यागात्मक इति यावत् । पञ्चमं प्रकारमाह--**नोपभुङ्क्ते**[2] इति । रागनिबन्धनभोगत्यागः । षष्ठमाह–**न च** इति । **तद्धीनो** द्रव्यत्यागहीनः । दक्षिणाहीनो नेत्यर्थः । शिष्यतेऽनुशि[Fol. 56a]ष्यते आचार्यपितृभिर्मातृभिर्बुद्धिर्यस्य [स][3] **शिष्यबुद्धिः** । **यथा** अयं तथा षड्विधत्यागीति वाक्यार्थः । यथोक्तगुणशालि........[अ]पि द्रव्याणां त्याग एवेत्याह–**सर्वैः** इति । **सर्वैः** यथोक्तैः षड्भिः प्रकारैः **द्रव्यवानपि यो भवेत्** सोऽपि त्यागीति शेषः । यदाह जनकः—

मिथिलायां प्रदीप्तायां न मे दह्यति किंचन ।

इति । (२१) मदस्याष्टादशदोषाः, क्रोधादयो द्वादश, विकत्थनादयश्च षट् । प्रमादस्याष्टौ दोषाः । यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधीनामनुष्ठानानि । दोषवियोगस्याप...स्थानान्याह—**इन्द्रियेभ्य** इति । **इन्द्रियेभ्यः** षड्भ्यः । **अतीतानागतेभ्य** इत्युपलक्षणम्, वर्तमानकालेभ्योऽपि अतीतेभ्यो भुक्तविषयास्मरणेन, अनागतेभ्यो मनो[Fol. 56b] राज्य[4]परिहारेण, वर्तमानेभ्यो दोषदर्शनेन ॥ (२१–२२) प्रमाद**दोषैरेतैर्मुक्तः**[5] **एतैः** इन्द्रियैर्निर्दोषैर्युक्तोऽपि **सुखी भवेद्** इत्यन्वयः । प्रकृतमर्थमुपसंहरति–**एतद्** इति । **केवलम्** असहायम् ॥

(२३) ब्राह्मणः केन भवतीति पृच्छति–**आख्याने**ति । **आख्यानम्** इतिहासः पञ्चमो येषां तैः [**वेदैर्भूयि**]**ष्ठं**[6] महत्वभाजनं यथा भवति तथा **कथ्यते जनः** ॥ (२४) न विद्यते ऋचो येषां ते **अनृचो** जातिमात्रेण ब्राह्मणाः । जात्या वेदैर्वा । वेदपक्षे, आख्यानपञ्चमैश्चतुर्भिस्त्रिभि [र्द्वाभ्या]मेकेन[7] वा केन ब्राह्मणो भवतीति प्रश्नार्थः । (२५) उत्तरमाह–**एकस्य** इति । अल्पप्रज्ञैरल्पजीवितैः **अज्ञानाद्** ऋग्यजुःसामाथर्वभेदेन तत्रापि शाखादिभेदेन बहुत्वं कृतम् । यथा **सत्यस्य** ब्रह्मण **एकस्य** अद्वितीयस्य **अज्ञानाद्** इत्यनुवर्तनीयम् । बहु-[विष]यानि[8] [Fol. 57a]...बहूनि ब्रह्माणि **सत्ये** एकरूपे ब्रह्माणि । **कश्चिद्** अपि कश्चिदेव वीतरागः, न सर्वो जनः । दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके [योजयति – **एवं वेद**]मिति[9] एकवचनम् एकत्वविवक्षया । **अनुत्साद्य** परित्यज्य । तमेव करणं कृत्वेति यावत् । **प्रज्ञां** प्रमाणज्ञानम् । **महति** ब्रह्मणि । तत्त्वमस्यादिवेदवाक्याद् ब्रह्म जानन्तीति यावत् ॥ (२६) दानादि ब्रह्मणस्त्वज्ञाने सति स्वर्गफल**लोभात्प्रवर्तते** । **सत्याद्** ब्रह्मणः **प्रच्यवमानानां** पृथग्भवताम् । शबरसंवर्धितराजपुत्रस्य यथा स्वरूपाज्ञानाच्छबरोचितं कर्म तथा दानादि सत्यात्प्रच्युतानामपि । यदि तद्ध्यानं [स्यात्तथा]पि[9] दानादि [प्रवर्तते][9] किंतु तद्ध्यानादपि प्रच्यवमानां दानादि प्रवर्तत इत्याह--**संकल्पाच्च**[10] इति । लोभात्कर्मप्रवृत्तिमुक्तप्रकारेण......[Fol. 57b] न्तिकरूपः ॥ (२७) **प्रतायेत** प्रतन्येत । **सत्यस्यैवावधारणात्** ब्रह्मज्ञानमुद्दिश्य

1 Ed. अन्यं । 2 Ed. नोपयुङ्क्ते । 3 Dropped in Ms. 4 Arj. बाह्य । 5 Ed. विमुक्तं । 6 Lacuna in Ms. 7 Apparently dropped in Ms. 8 Lacuna in Ms. 9 Lacuna in Ms. supplied from Arj. 10 Ed. संकल्पः ।

**विविदिषया**। कर्मानुष्ठानस्य प्रकार......यज्ञानां प्रकारानाह—**मनसा** इति। **मनसा** ध्यानयज्ञः, **वाचा** जपयज्ञः, **कर्मणा** अग्निष्टोमादियज्ञः। ब्रह्मावधारणार्थमित्येतानि कर्माणि, [न व्रत-] स्वरूपसिध्यर्थमित्याह—**संकल्पसिद्ध** इति। संकल्पः सम्यग्ज्ञानं तेन सिद्धः प्राप्तः। यथा हस्तगतविस्मृतसुवर्णं **संकल्पात्**[1] तत्त्वज्ञानाद् **अवतिष्ठते**[1] भ्रान्तिदर्शिताद्रूपात्परावृत्य स्वरूपेण भवति, तथा ब्रह्मापीति॥ (२८) तत्त्वज्ञाने च यमनियमादीनामेवोपयोगो न कर्मणामित्याह—**अनैभृत्येन** इति। **एतस्य**[2] मनसः **अनैभृत्येन** चाञ्चल्येन। **दीक्षितो** ब्रह्मोपदेशेन। **व्रतं** यमनियमादिकमष्टविधं योगम्। नाम्नो निवर्चनमा[ह—**नामेति**। **एतद्** अन ][3][ Fol. 58a ]न्तरनिर्दिष्टम्। **धातोः** अस भुवि इत्यस्मात्। अस्तीति सत्, सतो भावः सत्यम्। सदेव [सत्यं ][4] स्वार्थे प्रत्ययविधानात्। अथवा [ षद्लृ विशरणगत्यवसा]नेषु[5] सीदति लयं गच्छति कार्यजातमस्मिन्निति सत्। क्विप्प्रत्ययोऽधिकरणार्थः[6]। **सतां** ब्रह्मविष्णुशिवादीनां [सत्यमेव **परं** श्रेयो ध्येयत्वात्][7]। संज्ञितमाह—**ज्ञानम्** इति। **वै** प्रसिद्धौ। 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिषु वेदान्तेषु प्रसिद्धं नाम। सत्यशब्दार्थः संज्ञिनि संज्ञोपचारः। **प्रत्यक्षं** साक्षात्काररूपम्। स च साक्षात्कारः स्वरूपे फले विषये च। स्वरूपं चिदात्मता, फलमानन्दः, विषयः सन्मात्रता। एषां व्यतिरेकः कर्मणीत्याह—**परोक्षम्** इति। **तप** इति सर्वकर्मणामुपलक्षणम्॥ (२९) एवं सत्यप्रतिष्ठया ब्रा[ह्मणत्वम]भिधाय वेद [पाठ][Fol. 58b][8]कृतं विशेषमाह—**विद्याद्** इति। **बहुपाठी** चतुर्वेदस्त्रिवेद इत्यादि। **जपितेन**[9] पठितेन। **सत्याद्** ब्रह्मणः। ब्रह्म [ वेत्ति ][4] **ब्राह्मणः**॥ (३०) छन्द[सामृषि]त्वमाह[10]—**छन्दांसि** इति। अर्यते (?) ज्ञायते एभिरिति ऋषयः। **तत्पुरस्तात्** तदनन्तरम्। ऋष्यन्ति जानन्तीति ऋषयः कश्यपादयः। तेषां **स**[र्गः ? ...]न्ति। ये पुनश्छन्दोभिरर्थान्न विदन्ति तानाह—**छन्दोविद** इति। छान्दसाः **ते** ये **वेदवेद्यस्य**[11] **न विदुः** वेदार्थं न विदुः। विभक्तिव्यत्ययात्कर्मणि षष्ठी। उ इति स्तोभोऽनुकम्पायाम्। **तान्** वेदान् **अधीत्य** पठित्वा **न वेदान्**[12] **विदुः** इत्यन्वयः। अवेदनं च ऋषिच्छन्दोदे[वतावि]नियो[गाना]म[ज्ञाना]त्[13]॥ (३१) ब्राह्मणत्वे वेदानामन्वयव्यतिरेकव्यभिचारमाह—**न वेदानाम्** इति। न वेदान् कश्चिद् [ Fol. 59a ] वेत्ति तथापि गुरूपदेशात्सत्ये स्थित इति व्यतिरेकव्यभिचारः। कश्चित्पुनर्वेदान्वेत्ति तथापि सत्ये न स्थित इति [ अन्वयव्यभिचारः ][13]। अन्वयव्यभिचारं विवृणोति—**यो वेद** इति। वेदज्ञाने सत्यपि वेद्यस्याज्ञानाज्ज्ञानाभाव इत्यन्वयव्यभिचारः। उपलक्षण......[व्य]भिचारस्य। सत्यपि वेदज्ञाने सत्यज्ञानमस्तीत्येवंरूपस्य। **सत्ये** ब्रह्मणि **स्थितः** अवस्थितचित्तवृत्तिः। **स वेद्यं वेत्ति**[14] स [ब्राह्मण][15] इति भावः॥ (३२) उक्तमर्थमुपसंहरति—**अभिजानामि** इति। **अभिजानामि** लिङ्गेन परिचिनोमि। **विचक्षण** ज्ञानमेव लिङ्ग......माख्यातेन लिङ्गेन ज्ञानमपि ज्ञेयमिति

1 Ed संकल्पानधितिष्ठति। 2 Ed. तस्य। 3 Lacuna in Ms. 4 Not in Ms., but supplied from sense. 5 Lacuna in Ms. supplied from **Arj.** 6 Ms. °ऽनधिकार्थः। 7 So Arj. for the lacuna. 8 Lacuna in Ms. supplied from Arj 9 Ed. जल्पितेन। 10 Lacuna in Ms. 11 Ed. वेद्यवेदस्य। 12 Ed. वेद्यं। 13 So Arj. for the lacuna. 14 Ed. वेद। 15 So Arj. for the lacuna.

भावः । **छिन्नविचिकित्सो** निःसंदेहः । **सर्वसंशयं**[1] सर्वं स..........॥ [ Fol. 59b ] ( ३३ ) **तस्य** सत्यस्य **पर्येषणं** ध्यानं **गच्छेत्** प्रयत्नलक्षणया क्रियया व्याप्नुयात् । **प्राचीनं** संमुखम् । ब्रह्माभिमु[खं ध्यानं कुर्यादित्यन्वयः ][2] । **दक्षिणम्** इत्यादिना सत्यादन्याभिमुख-प्रकारान्निषेधति । **नाप्राचीनं**[3] नोत्तरम् । **कुतस्तिर्यक्** कुतो विदिक् । **नादिशमि**[ति निर्देशतां नि]षेधति[2] । दिक्-शब्देन विषयोपलक्षणात् ॥ ( ३४ ) तूष्णींभावेन सर्वेन्द्रियव्यापारे विराम-मुपलक्षयति—**मनसापि** इति । सर्वान्तः[करणविरामम][2]भिप्रैति । **अभ्यावर्तस्व**[4] विचार्य जानीहि । **अन्तरात्मा**[5] प्रत्यक्पुरुषः तत्र **विनिःश्रुतम्**[5] अतदाकारव्यावृत्त्या निश्चयेन श्रु[तं ]..............॥ ( ३५ ) मुनेर्भावो **मौनम्** इति यावत्, मुनित्वहेतुम् ॥ रहस्य-प्रकारमाह—**स्वराक्षरम्**[6] इति । स्वररूपमक्षरमोंकारः । तस्य वेद[नं रूपतोऽर्थत] [Fol. 60a]-श्च[5] अकारौकारमकारार्धमात्रास्वरूपम् । जाग्रत्स्वप्नसुषुप्ततुरीयाश्च यथासंख्यमेषामर्थः । **तु**-शब्दोऽ-वधारणे । [ स्वराक्षरमेव यो वेद ][7] **स एव मुनिः श्रेष्ठ** इति ॥ ( ३६ ) सर्वेषामोंकारावयवा-नामकारादीनामर्था अध्यात्म्ये जाग्रदादयोऽधिदैवेऽतिस्वरूपाः, [ तेषां **व्याकरणं** ][8] विविच्य कथनम्, ततो मुनिरेव **वैयाकरण**नामा भवति । स्वराक्षरज्ञानस्य विभूतिमाह—**प्रत्यक्षदर्शी** इति । लोकभ......सर्वं पुरुषेतरत् । आत्मानात्मानौ कार्त्स्न्येन पश्यतीति यावत् ॥ ( ३७ ) **सत्ये** ब्रह्मणि **तिष्ठन्** । तदितरे वस्तुनि मनोवृत्ती.........र्थेन । न केवलमहं ब्रवीमि वेदे-ष्वप्येतदेवोच्यते इत्याह—**वेदेषु**[9] इति । **आनुपूर्व्येण** स्थूल[सूक्ष्मादिरूपक्रमे][7]ण ॥

## ४४

( १ ) [ Fol. 60b ] अतिसारत्वाद् धृतराष्ट्रस्तमेवार्थं पुनः पृच्छति—**सनत्सुजात** इति । **कामेषु** वाञ्छितेषु मध्ये सुदुर्लभां **वि[श्वरूपां......** ] यम्[8] । किं कथया, **तत्** तत्त्वं **ब्रूहि मे** इति भावः ॥ ( २ ) उत्तरमाह—**नेदम्**[10] इति । **इदं ब्राह्मण्यम्**[11] उक्तं वक्ष्यमाणं च **त्वरमाणेन** क[तिपयैरेव दिवसैः][7] साधयामीति अभिनिवेशवता **न लभ्यम्** । **यद्** ब्राह्मण्यं **मा**[12] **त्वं पृच्छेः**[12] । **अव्यक्तविद्याम्** आत्मनो ज्ञानम् । आत्मज्ञानमेव...[फल]द्वारेण दर्शयति—**नाभिहृष्येत्**[10] । हर्षेण विषयेण विषयिणं रागं लक्षयति । रागं न कुर्यादित्यर्थः । **न कुप्येत्**[13] ...... न रागद्वेषौ । सा विद्या ब्राह्मण्यमिति भावः । **इति** उक्तप्रकारा **पूर्वं** पूर्वकालम् **एषा**[14] स्थितिरिति शेषः । अव्य[क्तविद्यायाः फलमुक्त्वा ][8] [ Fol. 61a ] साधनमाह—**बुध्ये**[15] इति । **बुध्ये** जाने । **तेषां** गुरूणां **ब्रह्मचर्येण** वक्ष्यमाणचतुष्पादरूपया सेवया **सिद्धां** निष्प-न्नाम् ॥ ( ३ ) अव्यक्तवि[द्यायाः ब्रह्मचर्यसाधन]त्वं[8] श्रुत्वात्मनो ब्रह्मचर्यासंभवं मन्यमानः पृच्छति—**अव्यक्तविद्यामिति** इति । हे **आर्य** पण्डित **इह काले** गार्हस्थ्यावसरे **व[सती** ब्रह्म][8]चर्येण स्थितिः **अनारभ्या** न करणीया । तस्माद् ब्रह्मचर्यलक्षणसाधनशून्योऽस्मदादिः

---

1 Ed. सर्वसंशयान् । 2 So Arj for the lacuna. 3 Ed. नार्वाचीनं । 4 Ed. अभ्यावर्तेत । 5 Ed. अन्तरात्मनि वै श्रुतं । 6 Ed. अक्षरं तत् । 7 Lacuna in Ms. supplied from Arj. 8 Lacuna in Ms. 9 Ed. वेदानां । 10 Ed. नैतत् । 11 Ed नैतद्ब्रह्म । 12 Ed. मां पृच्छसि । 13 Ed. reads differently. 14 Ed. अभिधास्ये पुराणीं for इति पूर्वमेषा। 15 Ed. बुध्या च ।

**कथं ब्राह्मण्यममृतत्वरूपं लभेत** । प्र........॥ (४) उत्तरम्—**येऽस्मिन्** इति । ब्रह्मण इमां **ब्राह्मीं स्थितिं** ब्रह्मेतरविषयान्मनोवृत्तीनां गतिनिवृत्तिम् । आरम्भकालाद् **अनु** पश्चात् [ **तिति** ][1]**क्षमाणा** यावज्जीवमनुतिष्ठन्त इति यावत् । **ते** योगिन **आत्मानं** चिन्मयं **निर्हरन्ति** विवेचयन्ति **देहात्**...... [ Fol. 61b ] [आ]काशमनोऽहंकारबुद्धिसमुदायात् । **मुञ्जात्** शरद्वतः **इषीकां** शरम् । **सत्त्वसंस्थाः** स वै (?) सत्त्वकायस्था ज्ञाने सं[स्थिताः । एतदुक्तं ][1] भवति—ब्रह्मसाक्षात्कारो हि ब्राह्मण्यम्, तद्ब्रह्मचारिणां ब्रह्मचर्ये स्थितानां भवति । गृहस्थानां च स्वधर्मनिष्ठानां ध्यान[धारणासमाधयस्त][2]दुपायो येषां तेषां ब्रह्मवेदनमिति भावः ॥ (५) ब्रह्मण्यकारणं निरूपयितुमाह—**शरीरमेतौ** इति । **एतौ** प्रसिद्धौ शर...... [स]हजभङ्गुरं न जातम् । **आचार्याज्जातेत्र जाता**[3] तदुपदर्शिता **जातिर्या** वेदनात्मविविक्ता आत्मसन्ना **नित्या**[4] अनिवृत्तिध......भ्यां देहधर्माभ्यामसंबद्धा ॥ (६) **आचार्य** एव **योनिः** तत्र **प्रविश्य** शिष्यभावेन मिलित्वा **गर्भे**[5] तदुपदेशे । निरस्तसमस्ता........... [ Folios 62, 63 missing ].

[ Fol 64a ] (१९) [ **कृष्णा** ][6]**दावपि इव**-शब्दोऽनुवर्तनीयः । तेन **कृष्णम्** इव, ध्यायतोऽपि कदाचिन्निद्रया तमसः समुद्रेके तन्मगताप्रतीतेः । **आयसम्** इव, निद्रायामेव सात्त्विकराजस्याम् । **अर्कम्** इव ध्यानविषयस्य चैतन्यस्य सर्वप्रकाशकत्वात् । **न पृथिव्यां तिष्ठति** न पृथिव्याधारम्, विभुत्वात् । **नान्तरिक्षे** न नभसि, ततोपि महत्त्वात् । एवं समुद्रसलिलादिष्वपि समानो न्यायः ॥ (२०) **रूपं** स्वरूपम् ॥ (२१) **बार्हते** बृहत्साम्नि । **ध्रुवम्** अविनाशि, अथवा **ध्रुवं** निश्चितम् ॥ (२२) **अपारणीयम्** अपरिच्छेद्यम् । **अन्तकोऽपि तद् रूपम् एति** यमोऽपि तत्र लीयते इत्यर्थः । **विनाशकाले** प्रलये । **अणीयरूपम्** इति छान्दसो लोपः । **क्षुरधारया** इति पञ्चम्यर्थे तृतीया ॥ (२३) **प्रतिष्ठा** आधारं स्थावरजङ्गमानाम् । **अमृतं** मुक्तिः । **लोकते** प्रत्यक्षयति विश्वमिति **लोकः** । **ब्रह्म** बृहत्त्वात् । **तद्यशः** यशोवन्निर्मलत्वा[ Fol. 64b ]त्, यशोहेतुत्वाद्वा । **भूतानि** पृथिव्यादीनि ॥ (२४) **अनामयम्** अशनायापिपासाशोकमोहजरामृत्युलक्षणार्थ षड्गामयरहितम् । **महद्** विभु । **उद्यता**[**नुगं स्वा**]र्थे[7] तद्धितः । **वाचो विकारं**[8] विगतः कारो व्यापारो यस्मात्, वाक्पथातीतमित्यर्थः । **अमृता** मुक्ताः ॥

[ Here follows comment on the additional Adhyāya ( Vulgate Adhy. 45 ), which is given in App. I, no. 2 in the Critical Edition. ]

शोकादीन् तत्त्वावरणरूपादीनुक्तानपि पुनर्ब्रूते तत्स्वरूपावधारणनिरोधयोरादरातिशयविधानाय । ( L. 1 ) **शोकः** इष्टनाशानुचिन्तनम् । **परासुता** मृत्युत्रासः ॥ ( L. 2 ) **कृपा** स्नेहः, न दया महादोषप्रस्तावे पठितत्वात् । **जुगुप्सता** जुगुप्सैव ॥ ( L. 5 ) **मूढा** मुग्धा **संज्ञा** बुद्धिर्यस्य ॥ ( L. 6 ) लब्धमविनियुज्योत्तरोत्तराभिलाषो लोभः । लब्धं विनियुज्योत्तरोत्तराभिलाषी **स्पृहयालुः** इत्यपौनरुक्त्यम् । **परुषो** मनोवाक्कायैः कर्कशः । **अवदान्यः**

---

1 Lacuna in Ms. 2 So Arj. for the lacuna. 3 Ed. शस्ता। 4 Ed. सत्या। 5 Ed. गर्भे। 6 No lacuna in Ms. but supplied to complete the sense. 7 Lacuna in Ms. 8 Ed. विकारान्।

अदाता ॥ ( L. 7 ) **बिभ्रत्कोपं**[1] दीर्घक्रोधः । **विकत्थां**[2] स्वगुणश्लाघाम् ॥ ( L. 8 ) **नृशंसधर्मा** हिंसाशीलः ॥ [ Fol. 65a ] ( L. 9 ) **नोत सदोपभुञ्जते**[3] न भोगशीला भवन्ति ॥ (१०) **संभोगः** स्त्रीभोगः, **संविद्** वात्स्यायनादिना संभोगोपकरणज्ञानं ताभ्याम् । विगतः समाद् ब्रह्मणो **विषमः** ॥ ( L. 14 ) ब्रह्मप्रतिबन्धकानभिधाय ब्रह्मव्यञ्जकानाह—**धर्म** इति । **धर्मो** निवृत्तिरूपः ॥ ( L. 15 ) **अमात्सर्यम्** अक्रोधः परसंपत्सहत्वं वा । **तितिक्षा** शीतोष्णादिद्वन्द्वप्रतीकारबुध्द्यनुत्पादः । **अनसूया** परदोषाग्रहणम् ॥ ( L. 16 ) **दानं** षड्विधस्त्यागः । **श्रुतम्** अध्यात्मशास्त्राणां ब्रह्मणि तात्पर्यावधारणम् । **धृतिः** तत्त्वाभिरतिः । **क्षमा** आक्रोशनादिप्रतीकारबुध्द्यनुत्पादः ॥ ( L. 17 ) व्रतानां महत्त्वं ब्रह्माभिव्यञ्जकत्वात् ॥ ( L. 18 ) **एतेभ्यो** ब्रह्मादिभ्यो हेतुभ्यः । **प्रच्यवेत** शोकादिमहादोषेभ्यो विमुच्येत । ( L. 19 ) **स सर्वां पृथिवीं प्रशासन्**[1] अपि मुच्येतेत्यन्वयः ॥ ( L. 20 ) प्रकारानाह—**त्रिभिः** इति । द्वादशभिस्तावन्मुच्यते, एषां मध्ये **त्रिभिर्द्वाभ्यामेकेनापि** ॥ ( L. 21 ) **नास्य स्वमस्ति...** [ Fol. 65b ] साभावात् ॥ ( L. 22 ) तानेव त्रीनाह—**दम** इति । **त्यागो** दानम् । **अप्रमादः** श्रुतम् । **अमृतं** कैवल्यम् ॥ ( L. 23 ) **ब्रह्मजात्यानि** ब्रह्मपरिज्ञानप्रयोजनानि । **ब्रह्ममुख्यानाम्** इति पाठे ब्रह्मपराणामिति बोद्धव्यम् ॥ ( L. 24 ) **सद्वासद्वा** कर्म कुरुत इति शेषः । **परिवादो** दोषोद्भावनम् ॥ ( L. 27 ) **लोकद्वेषं**[5] राजमार्गरोधनादि । **प्रातिकूल्यं** [ विपरी ][9]तानुष्ठानम् अर्थाल्लोकस्य ॥ ( L. 28 ) **पराधीन्यं**[6] मदकृतहर्षवशता । **पैशुन्यम्** असहिष्णुता । ( L. 29 ) **अर्थहानिः** असमानविरोधकृता ॥ ( L. 30 ) **विवादो**[7] विरुद्धो वादः । **संज्ञानाशो** मोह **अभ्यसूयिता** अभ्यसूयिनित्ययोगः ॥ ( L. 32 ) **सौहृदे** त्यागे, शोभनहृदयो हि त्यागं करोति ॥ ( L. 33 ) **प्रिये** अर्थिनः कृते **हृष्यन्ति अप्रिये** कृते **व्यथन्ते** दुःखिनो भवन्ति ॥ ( L. 34 ) अयमर्थः—यद् **याचते** तद्दातुः **आत्मनः सुहितं**[8] सुष्ठु हितम् ॥ ( L. 35 ) **अयाच्यमपि** यद् **ददाति** तदपि सुहितम् । तत्र हेतुः—**देयं खलु स्यात्** ॥ ( L. 36–37 ) पुत्रदारादी[**नभ्य**][9][ Fol. 66a ]**र्थितः** सन् **शुद्धभावो** ब्रूते इत्यपरो गुणः ॥ ( L. 37–38 ) इह मर्त्यलोके सम्यक् सुखितया **न वसेत्** न तिष्ठेत् । **कामाद्** रागात् । **त्यक्तद्रव्यो** भवेदिति भावः । इति पञ्चमो गुणः ॥ ( L. 39 ) **भुङ्क्ते कर्म** प्राक्तनं तत्फलम् । सुखदुःखमनुभवतीत्यर्थः । **स्वामिषं** ( ? )[10] स्वकामनां **बाधते** बन्ध्यां करोतीत्यर्थः ॥ ( L. 40 ) **एवम्** उक्तप्रकारेण **द्रव्यवान् गुणवान्** त्यागगुणवान् यो **भवति** स **सात्त्विकः** ॥ ( L. 41 ) **पञ्च भूतानि** श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि, भूतकार्यत्वात् । **पञ्चभ्य.** शब्दस्पर्शरूपरसगन्धेभ्यो **निवर्तयति** यः स **तादृशो** ब्रह्मयोग्यः ॥ ( L. 43 ) एवं सत्त्वे स्थितानां कर्माभिधाय ततः **प्रच्यवमानां** कर्म प्रतिपादयति–[ **सत्त्वादिति** ][10] । **संकल्पेन समाहितम्** एकाग्रीभूतम् ॥ ( L. 44 ) **सत्यस्यैवावबोधनात्** प्रयोजनात् ॥ ( L. 46 ) **संकल्पसिद्धं** संकल्पजन्मना कर्मणा सिद्धम् । **शुद्धं**[11] विशुद्धा[न्तःकरणम् ][11] ।

1 Ed. क्रोधं बिभ्रत् । 2 Ed. विकत्थी । 3 Ed. सभाजयन्ते । 4 Ed. शिष्यात् । 5 Ed. लोकद्वेष्यं । 6 Ed. पारतन्त्र्यं । 7 Ed. अनिवादः । 8 Ed. सुचिरं । 9 Lacuna in Ms. supplied chiefly from Arj. 10 Ed. स्वाशिषं । 11 Ed. सिद्धं ।

[ Fol. 66b ] **संकल्पः** तत्त्वज्ञानं तत्त्वं वा **अधितिष्ठति** ॥ ( L. 48-51 ) एतदध्यात्मप्रतिपादकं वचः **अध्यापयेत्** शिष्यान् । **महद्यशस्यं** च यस्माद् **अविकारं**[1] विकारातीतम् । **[सर्वमि]दं** चराचरम् । **तत्** सत्यं **ये विदुस्ते अमृता** मुक्ता भवन्ति ॥ ( L. 52-55 ) वेदनेनैव मुक्तिर्न कर्मणेत्याह–**न कर्मणा** इति । सुकृतं दर्शयति–**सत्यम्** इति । **न ते[न** सुकृते]न[2] **बालः** तत्त्वाप्रतिपत्तिमान् **मृत्युमत्येति**[3] । **रतिं** रतिविषयं सुखं **न लभते** । **अन्तकाले** देहोत्सर्गकाले ॥ ( L. 56 ) येन तु सत्यं लभते तदाह–**तुष्णी[मेकम्** इति ][2] । **तूष्णीम्** इति **तूष्णीम्** अविकल्पम् **एकम्** अद्वितीयम् **उपासीत** ध्यायेत् । **न चेष्टेत्** न चलेत् ॥ (L. 58 ) **तिष्ठन्** मनोवृत्तीनां गतिनिवृत्तिं कुर्वन् । **ब्रह्म पश्यति** साक्षात्करोति । **आवसति**[4] प्राप्नोति ॥ ( L. 59 ) **आनुपौर्व्येण**[5] क्रमेण ॥

## ४५

( १ ) तत्त्वं प्रतिपादयति–**यद्** इति । **शुक्रं** शुद्धं सारं वा । **व्याप्यमान** स्वयामात शेषः । **मह[** Fol. 67a **]द्यशो** महाभास्वरम् । **देवा** ब्रह्मादयः । **विराजते** स्वयं भासते । **योगिनः** सनकादयः । **भगवन्तं** भगभाजम् ।

ऐश्वर्यस्य समस्तस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥

( २ ) **शुक्राद्** ब्रह्मणो **ब्रह्म** महत्तत्त्वं **प्रभवति** उत्पद्यते । **वर्धते** क्रियाभिर्गुणैश्चोपचीयते । **ज्योतिषां** वह्न्यादीनां **मध्ये तद्ततं तपति** दहति **तापनं** रागादिकम् । ज्योतिर्भिरतप्तत्वेन रागादितापनत्वेन च पुनरुपन्यासः । **योगिनः**...ति ॥ ( ३ ) **अनु**[6] महत्तत्त्वात्पश्चाद् **आपः** । **अद्भ्यो** रसतन्मात्ररूपाभ्यो महत्तत्त्वतादात्म्यस्थिताभ्यः । **उभौ** क्रममहान्तौ **देवौ** उद्योतमानौ शु......तत्संपर्कान्महा**सलिलस्य मध्ये** स्थितौ **शिश्रियाते** श्रियेते स्म, अर्थात्सलिलेन । निराश्रयस्य कार्यस्यानुपपत्तेः । **अन्तरिक्षे** शून्ये, आ[श्रय ][2] [ Fol. 67b ]स्यान्यस्याभावे । **अतन्द्रितः**[7] अपरिम्लानज्ञानः । **विमूचिः**[8] विगतः सूचिः खलो यस्मात्, खलेनाप्यत्र दोषा उत्प्रेक्षितुं न शक्यन्ते इति भावः । **...**सते आच्छादयत्[9] । **बिभर्ति** धारयति । अर्थादनयोरुत्पत्तिरुक्ता । अनेनैव विशेषणेन पुनरुपन्यासः—**योगिन** इति ॥ ( ४ ) देव्योर्विशेषणम्—**[शश्वच्छुक्रे]**[10] नित्यशुद्धे । **दिशः प्रभवन्ति**[11] इत्यन्वयः । अनयैव व्याप्त्या पुनरुपन्यासः–**योगिन** इति ॥ ( ५ ) **ध्रुवस्य** उत्तानपादेः । तस्य विशेषणम्–**अव्ययकर्मणः** । **[ रथ]स्य**[10] **चक्रे तिष्ठन्तः**[12] **अश्वा** वायवः, व्यापकत्वात् । **केतुमन्तं** ध्रुवलक्षणेन चिह्नेन लक्षितम् । **तद्**[13] **दिव्यमजरं** वहन्ति इत्यन्वयः । अनेनैव विशेषणेन पुनराह–**योगिन** इति ॥ ( ६ ) **न**

1 Ed. विकारं । 2 Lacuna in Ms. Ed. नैतेन । 3 Ed. मृत्युमभ्येति । 4 Ed. आविशति । 5 Ed. आनुपूर्व्येण । 6 Ed. अथ । 7 Ed.स सध्रीची । 8 Ed. विषूचिः । 9 Should this line be read as वसान आच्छादयन् ? 10 Lacuna in Ms. 11 Ed. reads the lines differently. 12 Ed. तिष्ठन्तं । 13 Ed. तं ।

**सादृश्ये** कस्यापि स्यादिति शेषः। **चक्षुः** उपलक्षणमिन्द्रियान्तराणाम्। **मनीषया** बुध्या। **मनसा** संकल्पेन। **हृदा** अहंकारेण। [ Fol. 68a ]......रूपेण ॥ ( ७ ) **द्वादशपूगां** बुद्धीन्द्रियाणि मनःप्राणाश्चेति द्वादशसमूहम्। उत्तरोत्तरशरीरसरणात् सैव **सरित्**। तां स्वैरधिष्ठातृभिः देवै **र[क्षितां]**[1] पालिताम्। **मधु** इन्द्रियजनितं सुखम् **इच्छन्तः**[2] **इह**[3] संसारे **संचरन्ति** एकं शरीरं विहायान्यदाविशन्ति। **घोरां** दुःखान्तराम्। **तं** विषयसुखमाविशन्तं **योगिनो भगवन्तं पश्यन्ति**[4] इत्यन्वयः ॥ ( ८ ) **तन्मधु** मध्विव विषजातम्। तस्य संख्या-माह—**अर्धमासं** पञ्चदशसंख्या। तथा हि पञ्चगुणाः पृथिव्याः, अपां चत्वारः, तेजसस्त्रयः, वायोर्द्वे, आकाशस्यैक इति। इदं शब्दादि **हविः** इव अग्नौ हूयत इति **अकल्पयद्** अचिन्त-यत्। तथाभूतं क्षेत्रज्ञं **योगिनो भगवन्तं पश्यन्ति** इत्यन्वयः ॥ ( ९ ) हिरण्यस्येव हितत्वेन रमणीयत्वेन च वर्णः श्लाघा यस्य [ Fol. 68b ] तद् **हिरण्यवर्णं** ब्रह्म। न श्वोऽपि स्थास्य-न्तीति अश्वा देहादयः, तेषु तिष्ठतीति **अश्वत्थः** कूटस्थो नित्य आत्मा। तम् **अभिपत्य** तत्त्वज्ञानेन तेन सहैकतां गत्वा। न विद्येते स्वापजागरितलक्षणौ पक्षौ येषां ते **अपक्षकाः** क्षेत्रज्ञाः। तत एव तत्त्वज्ञानशून्याः **तत्र** अश्वत्थे संजातस्वप्नजागरणपक्षाः **प्रपतन्ति** जीवभावेन गच्छन्ति। **यथादिशं** कर्मणा निर्दिष्टां दिशम्। **तम्** अपक्षावस्थं पक्षावस्थं च **योगिनो भग-वन्तं पश्यन्ति** इत्यन्वयः ॥ ( १० ) **पूर्णात्** नित्यनिवृत्त......[ आ ]नन्दस्वभावतया निरा-काङ्क्षत्वात् **पूर्णं** जीवस्य रूपम्। जीवस्य च पूर्णत्वं तत्त्वज्ञाने सति भाविनीं वृत्तिमाश्रित्य **उद्धरति**[5] उद्ध[ Fol. 69a ]वति। अथवा **पूर्णाद्** वासुदेवात् **पूर्णं** संकर्षणाख्यम्। पूर्णत्वं चैश्वर्यादि षड्गुणयोगात्। अथवा सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रतालुप्तशक्तिरनन्तशक्तिश्चेति षड्गुणाः। **पूर्णाद्** एवमानन्दरूपात् **पूर्णानि** विषयसुखानि **चक्रिरे** शरीरेन्द्रियविषयैः। सृष्टिमभिधाय संहार-माह—**हरन्ति** इति। अविवक्षितकर्मत्वाल्लीयन्त इति यावत्। **पूर्णाद्** इति विभक्तिव्यत्यया-त्सप्तम्यर्थे पञ्चमी। **पूर्णानि** जीवा विषयसुखानि च। **पूर्णमेवावशिष्यते** प्रलयमुक्त्यवस्थयो-रिति शेषः। **तं** सृष्टिप्रलयमुक्त्यवस्थासु **योगिनः** पश्यन्ति इत्यन्वयः॥ ( ११-१२ ) **यस्मात्**[6] पूर्णा[त्]...द् **वै वायुराततः**[7] समन्ताद्विस्तृतः। **यस्मिन्**[8] **च प्रलयः**[9]। स वायु-शब्दो देवतार्थः। **अग्निः** अपि वायुवत् त्रिधा विभजनीयः। तत्राधिदैव आ......[ Fol. 69b ] यादिरूपः। अध्यात्मं जाठरादिरूपः। तयोरधिष्ठाता हस्तो देवश्च। तत्र द्वितीयवायुशब्दो श[क्ति][10]हस्तो देवः। तं यथोक्तं व्याप्तिमन्तं **भगवन्तं पश्यन्ति** इत्यन्वयः। **तस्मात्** पूर्णाद् वायुः सूत्ररूपी। स एव च हैरण्यगर्भः समष्टिरूपः। **प्राण आतत** इति निर्वचनं प्राप्त्यतिशय-प्रतिपाद[नाय। **त**]**तः** पूर्णाद् अथवा 'हिरण्यगर्भा[त्][11] चिह्नात्[12] (?) सर्वं **विद्मः**[13]। **तं**[14] पूर्णं हिरण्यगर्भं वा **वक्तुं न शक्नुमः** सूक्ष्मत्वात्। यं वक्तुं न शक्नुमः **तं भगवन्तं पश्यन्ति** इत्यन्वयः ॥ ( १३ ) **गिरति** ग्रसते। **अपानः**[15] प्राणे लीयते इत्यर्थः। **चन्द्रमा** मनः। **आदित्यो** बुद्धिः सत्त्वाधिक्यात्प्रभास्वरत्वाच्च **गिरते चन्द्रं मनः**,

---

1 Dropped in Ms. 2 Ed. ईशन्तः। 3 Omitted in Ed. 4 Ed. प्रपश्यन्ति everywhere. 5 Ed. उद्धरन्ति। 6 Ed. तस्मात्। 7 Ed. आयातः। 8 Ed. तस्मिन्। 9 Ed. प्रयतः। 10 So Arj. for the lacuna. 11 Dropped in Ms. 12 Ms. चितात्। 13 Ed. विद्यात्। 14 Ed. तत्। 15 Ed. अपानं।

**ब्रह्म** आह्लादकत्वात् । **तं** चन्द्रमसं **भगवन्तं पश्यन्ति** इत्यन्वयः ॥ (१४) हन्ति अवगच्छतीति **हंसः** परमात्मा । **सलिलात्** मायातः । **उच्चरन्** ऊर्ध्वं गच्छन्, माया [ Fol. 70a ] मतिक्रामन् इत्यर्थः । **एकं पादं** जीवलक्षणम् । **नोत्क्षिपति** न संहरति । **तम्** एकं पादं **स** हंसः **ततं** विस्तृतम् **ऋत्विजं** क्रतौ यजन्तं नो[त्क्षि]पति तदा **न मृत्युः** प्रमाद-लक्षणो **नामृतं** मायालक्षणं **चरेद्**[1] इत्यन्वयः । **तम्** एकं **भगवन्तं पश्यन्ति** इत्यन्वयः ॥ (१५) **देवो** द्योतकत्वात्क्रीडनत्वाच्च । **स आत्मा** व्यापकः **पुरुषः** पुरि शयनात् । **एवं पावकम्** अग्निं **गिरन्** ग्रसमानः । **एवम्** इति **यो वेद तस्यात्मा न रिष्यते** न हिंस्यते । ते विदुः ।......**पश्यन्ति** इत्यन्वयः ॥ (१६) **सहस्रं सहस्राणां पक्षं**[2] **संतत्य** विस्तृत्य **संपतेत्** गच्छेत् । गरुडप्रकृतिर्यः स **चेन्मनोजवो**ऽपि स्यात् तथा **मध्ये आगच्छेत्** न [ ब्रह्मणोऽ ]न्तं[3] गच्छेत् । **तम्** अनन्तं **भगवन्तं पश्यन्ति** इत्यन्वयः ॥ (१७) **न सादृश्ये**[4] नोपमायाम् । **सुविशुद्धसत्त्वा** अतिनिर्मलबुद्धयः । **हितो** निर्दुःखसुखस्वभावः । [ Fol. 70b ] **मनीषी** सर्वज्ञत्वात् । **मनसा** रागादिमलिनेन **न तप्यते**[5] न स्वभावतो रागसंबन्ध इत्यर्थः । **श्रयेयुः**[6] ज्ञानेन । **तं** निरुपमं **भगवन्तं पश्यन्ति** इत्यन्वयः ॥ (१८) **गूहन्ति** संवृण्वन्ति, रक्षन्तीति यावत् । **गह्वराणि** छिद्राणि । यथा **सर्पाः** तथा **मर्त्याः स्वेन वृत्तेन** दम्भरूपेण **गह्वराणि** पापानि **गूहन्ति** इत्यन्वयः । तत्र हेतुः—**शशिक्षयात्** चित्तनाशात् । **स्वशिक्षया** इति वा पाठः, न शास्त्रोपदेशेन । **तेषु** प्रमूढेषु सत्सु **विमूढा जना विमुह्यन्ति**[7] । **यथाध्वनो**[8] विमूढः पृष्ठलग्नानन्यान् **मोहयते** भाययति[9] । अथवा, **मर्त्याः स्वेन वृत्तेन** क्षेत्रज्ञचरितेन **गह्वराणि** इन्द्रियाणि **गूहन्ति । तेषु** इन्द्रियच्छिद्रेषु **मूढाः प्रमुह्यन्ते,** न ज्ञानिनः । **यथा ध्वानः** अकस्मादुत्पन्नो **मोहयते भयाय** । **तं** पापगूहकं कं वा **भगवन्तं** [ Fol. 71a ] **पश्यन्ति** इत्यन्वयः ॥ (१९) ज्ञानिनः स्थितिमाह—**नाहम्**[10] इति । **सत्कृतः** पूजितः **सदा स्याम्** अहमिति **न** चिन्तयेत् । **न मृत्युः** मेऽस्ति, अत एव मृत्युप्रतिषेधरूपम् **अमृतं कुतः स्याद्** इत्यपि न चिन्तयेत् । यज्ञदानतपःप्रभृति **सत्यम्,** तद्विरुद्धमसत्यम् । तद्वे **सत्यस्य** ब्रह्मणः **समानं बन्धनम्**, द्वयोरपि तत्प्राप्त्यनुपायत्वात् । **सतो** विद्याया **असतः** अविद्याया **योनिः** कारणं **एकमेव**[11] ब्रह्मैव । तेन विद्यायामविद्यायां च तुल्यम् । त......**सत्यानृते** यस्य **बन्धने** इति **तं भगवन्तं पश्यन्ति** इत्यन्वयः ॥ (२०) **समानं** ब्रह्म **एतद्** इति अभिनये-नापरोक्षतया दर्शयति—**मानुषेषु** इति । कर्मसंभवोपदर्शनार्थम् । मानुषेष्वपि न साधनं कर्म किं पुनरसंभवत्कर्मसु देवादिष्विति[12] भावः । **असाधुना** निषिद्धेन यथा **न दृश्य** [Fol.71b]-ते, तथा **साधुना** विहितेनापि **न दृश्यते** । सिद्धस्य साध्योपन्यासो[13] दृष्टान्ताय । **एतत्** साध्वसाधु **अमृतस्य** अनुपायतया अप्रमाणम् । **एवं** सति **युक्तो** योगयुक्तो **मधु** अमृतं परीप्सेत् प्राप्तुमिच्छेत् । **तं** कर्मभ्यामलभ्यं **भगवन्तं पश्यन्ति** इत्यन्वयः ॥ (२१) **अस्य युक्तस्य हृदयं नातिवादा** आक्षेपाः **तापयन्ति** । **मनोब्राह्मीं** मनःसरस्वतीं मानसीं प्रज्ञामिति

1 Ed. भवेत् । 2 Ms. लक्षं । 3 So Arj. for the lacuna. 4 Ed. न दर्शने । 5 Ed. अभिपश्येत् । 6 Ms. अवेयुः । 7 Ed. प्रमुह्यन्ति । 8 Ed. यथाध्वानं । 9 Ms. भेयायते । 10 Ed. सदा सदासत्कृतः स्यात् । 11 Ed. एक एव । 12 Ms. देवादिरिति । 13 Ms. सद्योपन्यासो ।

यावत् । **लघुतामादधीत** लघ्वीं कुर्यात् । स्वार्थे तद्धितः । **अस्य** ब्रह्मणः **प्र[ज्ञानं]**[1] प्रकृष्टं चैतन्यं कर्तृ । **नाम** प्रसिद्धम् । **धीरा** विवेकिनः **लभन्ते** संनिधानात्प्रज्ञानमेव । **तम्** अतिवादा[2]दिभिरताप्यमानं **भगवन्तं पश्यन्ति** इत्यन्वयः ॥ ( २२ ) उपसंहरति—**एवम्** इति । [ **एवम्** ] उक्तप्रकारेण **सर्वभूतेषु** स्थावरजङ्गमेषु **आत्मानं** प्रत्यक्चैतन्यम् अ[ Fol. 72a ] **नुपश्यति** । गुरुमुखाच्छ्रुत्वा **स** [ **अन्यत्रान्यत्र** ][3] शब्दस्पर्शादिषु **युक्तेषु** तत्र वशेषु । **किं शोचेद्** अपि तु न शोचेत् । **ततः परं** दर्शनानन्तरम् ॥ ( २३ ) **उदपाने** कूपे **सर्वतः संप्लुतोदके** जल....उदककार्यं स्नानपानावगाहनादिकं क्लेशेन भवति । तथा **वेदेषु सर्वेषु** सुखप्राप्तिदुःखपरिहारलक्षणं **विजानतो** ज्ञानिनः......... ॥ (२४) अङ्गुष्ठमात्रहृदयावच्छेदाद् **अङ्गुष्ठमात्रः**, वस्तुतस्तु **महात्मा** । **हृदये** बुद्धिलक्षणे करणे **निविष्टः** क्षीरनीरवदेकतामुपगतः । **न दृश्यते पुरुषोऽयम्**[4] अन्तःकरणमिदमहमिति विविच्य नावधार्यते । **अजः** अनुत्पत्तिमान् । **चरो** विषयभुक् । **अतन्द्रितो** लयविक्षेपहीनः । **दिवारात्रं** सर्वकालम् । **मत्वा** मनने दृढीकृत्य...साक्षात्पश्यन् । **प्रपन्नः**[5] तदेकतां गतः । [ Fol. 72b ] **आस्ते** सत्तामात्रेणावतिष्ठते ॥ ( २५ ) युक्तस्य सर्वात्मभावमाह—**अहमेव** इति । पित्रादिषु प्रत्यक्तयावभासमानः **अहमेव** । **नास्ति** अतीतागतम् ॥ ( २६ ) पितृपितामहाद्युपाधिभेदेऽपि अहमिति रूपं न भिद्यते इत्याह—**पितामह** इति । **आत्मस्था** आत्मभावेन स्थिताः । मम तवेति भेदो वैकल्पिको, न वास्तवः ॥ ( २७ ) सर्वात्मकत्वमात्मनो दर्शयति—**आत्मैव** इति । **स्थानं** स्थितिः । **जन्म** उत्पादः । **अप्रतिष्ठः** प्रलय इति । सर्वमहमेव । एतदुक्तं भवति—जन्मादि सर्वमात्मनि विकल्पारोपितमपि वस्तुतश्चिन्त्यमानं नात्मव्यतिरिक्तमस्तीति । **देवो**[6] द्योतनात्क्रीडनाच्च । **अजरे**[7] अजहत्स्वभावे ॥ ( २८ ) तन्मात्रे प्रतिष्ठानयोगस्य अ[णोरणीयस्त्वा][8]त् सूक्ष्मबुद्धिवेद्यत्वात् **सुमना** रागद्वेषरहिते शोभने **मनसि प्रकाशमानः**[9] । [ Fol. 73a ] **जाग्रति**[10] वचनव्यत्ययात् । **पितरं** कारणम् । **पुष्करे** हृदयपुण्डरीके । **निहितम्** उपलब्धिविषयतया निवेशितम् ॥

सनत्सुजातीयगिरो गभीराः प्रत्यमुशंतति( ? )[11]शैवालिन्यः ।
हरन्तु पापानि ह देवबोधप्रबन्धसोपानसुखावगाहाः ॥

सनत्सुजातं समाप्तम् ॥

## ४६

**एवं सनत्सुजातेन** ( ४६।१ ) इत्यादेः **इन्द्रानुजं तं शरणं प्रपद्ये** ( ६९।७ ) इत्यन्तस्य द्यूतजितयुधिष्ठिरराज्यसमर्पणतया धर्मसहकृतः पाण्डवानां प्रभावातिशयः कृष्णप्रभावातिशयेनानुगृहीतस्तात्पर्यार्थः ॥

( २ ) **सूतस्य** संजयस्य ॥ ( ५ ) **अश्मसारं** लौहम् । **दान्तैः** करिन्तदभवैः । **सोत्तरच्छदैः** सपिधानवसनैः ॥ ( ११ ) **समितिशोभनाः** सुभटाः ॥

1 Lacuna in Ms. 2 Ms. अभिवादा° । 3 Lacuna in Ms., conjecturally filled up. 4 Ed. असौ for अयं । 5 Ed. प्रसन्नः । 6 Ed. वेद° । 7 Ed. अजरो । 8 Lacuna in Ms. 9 Ms. प्रकाशमाने । 10 Ms. ( wrongly ) जागर्ति; see Sarv. 11 Read प्रत्यन्तमुत्संतति– ?

४७

( ३ ) **अन्वत्रस्तः** अभीतः। **बाहुवीर्यम्** आत्मनः। **उपह्वरे** समीपे॥ ( ४ ) **पाण्डवायोधनाय** पाण्डव [Fol. 73b] युद्धाय॥ (६) **अनिर्विष्टम्** अनुपभुक्तम्॥ (७) **अश्विभ्यां** नकुलसहदेवाभ्याम्, पुत्रे पितृपचारात्। **अपध्यानाद्** विरुद्धसंकल्पात्॥ ( ८ ) **हेतोः** दैवात्॥ ( ९ ) **दुःखशय्यां** निरन्तरं दुःखम्। **परासुः** गतजीवः॥ ( ९-११ ) ह्रीप्रभृतिना **बलान्तेन** पाण्डवानामिति शेषः॥ ( १० ) **अध्यातिष्ठन्**[1] प्रभुत्वेनाधितिष्ठन्॥ ( ११ ) **माया उपधा** यस्य। **माया** अपरप्रयुक्तं द्यूतादि छद्म तस्य **उपधा** परीक्षा। तत्र **प्रणिधानम्** एकचित्तता। **आर्जवं** विहितेन मार्गेण गमनम्। **तपः** कायतापनो धर्मः। **दमो** मनसस्तत्त्वे विनियोगयोग्यता। **गुप्त्या** रक्षणेन। **बलेन** चतुरङ्गेन। **प्रतियुक्तः**[2] प्रातिकूल्येन विषयीकृतः। **तितिक्षमाणः** क्षममाणः। **क्लिश्यमानो** दुःखैर्विषयीक्रियमाणः। **अतिवेलम्** अत्यर्थम्॥ ( १२ ) **संशितात्मा** सम्यक् [Fol. 74a] शितः शुद्ध आत्मा यस्य। **यत्तम्** अनुत्सृष्टम्। **अवस्रष्टा** कर्ता। **उद्भूतम्**[3] उत्क्षिप्तम्॥ ( १३ ) **अग्निः** कृष्णवर्त्मा गुल्ममपि निर्दहन्नित्यर्थः। **ज्वलितः** ज्वाला [ भिरुच्छ्रि ]तः[4]। **समिद्धः** स्नेहसिक्तः॥ ( १४ ) **अमर्षणं**[5] दीर्घक्रोधम्॥ ( ३१२* ) **स्वालक्षण्यम्** असाधारणलक्षणम्। **अतिमानी** दुर्योधनः। **नागान् भिन्नकुम्भान् वमनः** शोणितमिति शेषः। तत्रोपमा यथा **कुम्भान्** कलशान्। अथवा **भिन्नकुंभान्** गलन्मदान्॥ ( १५ ) **गावो** गाः॥ ( १६ ) **सकृद्** एकवारम्। **समागमे** युद्धे॥(१७) **शैक्येन**[6] खड्गेन॥ ( १८ ) **तृणप्रायं** तृणबहुलम्। **इव**-शब्दो वाक्यालंकारे। **परिसिक्तं**[7] हुतम्॥ ( १९ ) **धृष्टयोधं**[8] प्रगल्भयोधम्॥ ( २० ) **उपासङ्गान्** तूणबन्धनपाशान्। **दक्षिणेन** दक्षिणपार्श्वस्थानात्। **प्रवेता**[9] एकत्र निक्षेप्स्यति॥ ( २१ ) **दुःखशय्यां** निरन्तरं दुःखम्। **आशेत** आरूढवान्। या दुःखशय्या सा चासावायुद्धं चेति। **तदा** [ Fol. 74b ] **युद्धं** तद्दृष्ट्वेत्यर्थः॥ (२४) **गताः** प्राप्ता ऊर्ध्वगामिनो **वाहा** येन। उद्वाहत्वादेव **अकूजनम् अक्षं** यस्मिन्। शोभनवर्णास्तारा नक्षत्राणि अथवा **सु[ वर्ण ]तारम्** उत्तमम्। **आततायी** वधोद्यतः। **क्षान्तैः**[10] भारसहैरश्वैरिति शेषः। ( २५ ) **विवर्तमानं** विविधैर्वामदक्षिणप्रकारैर्वर्तमानम्। **पूर्वी**[11] संमुखम्॥ ( २६ ) **ह्रीनिषेधो** लज्जानिवर्तनीयः। **निपुणः** शस्त्रेषु अस्त्रेषु। **आर्छन्** मुञ्चन् **जनान् क्षेप्ता** क्षेप्स्यतीत्यन्वयः॥ (२७) **आयतः** आगच्छतः॥ (२८) **विगाहिता** हिंसिष्यति॥ (२९) **प्रभद्रका** यादवभेदाः॥ ( ३६ ) **वरूथी** रथगुप्तिमान्॥ ( ३८ ) **सेनापतिः** धृष्टद्युम्नः॥ ( ४० ) **इदं च ब्रूयाद्**[12] इति अस्येयं संगतिः – अर्जुनः संजयमुखेन धार्तराष्ट्रं शिक्षयति **शिनेर्नप्तारं सात्यकिं मा वृणीष्व** इति। **अद्वितीयम्** अस्मास्वद्वितीयचित्तम्। [ Fol. 75a ] **प्रवृणीम** वयमेवैनं न त्वं चरितु[13]-मर्हसि॥ ( ४४ ) **चित्रो** नानाश्चर्यो वा। **सूक्ष्मो** दुरधिगमः। **सुकृतः** सुविहितः। **योगः** संनहनम्। **वृष्णिसिंहस्य** सात्यकेः। **भूयान** अतिबहुः॥ ( ४५ ) **माधवस्य** सात्यकेः॥

---

1 Ed. अध्यातिष्ठत्। 2 Ed. प्रीतियुक्त्या। 3 Ed. उद्धृतं। 4 Lacuna the Ms; so Arj. 5 Ed. दुर्मर्षणं। 6 Ed. सैन्यान्। 7 Ed. परासिक्तं। 8 Ed. अधृष्ययोधं। 9 Ed. प्रचेता। 10 Ed. दान्तैः। 11 Ed. सर्वो। 12 Ed. ब्रूयाच्च मा। 13 Arj. वारितुं।

(४८) **तप्ता** तप्स्यते ॥ (५२) **विपाठाः** शराः। **द्विजाः** पक्षिणः। **प्रचेतारः**[1] प्रवेक्ष्यन्ति ॥ (५३) **द्रष्टा** द्रक्ष्यन्ति ॥ (५४) **आततेषुः** विस्तृतबाणः ॥ (५५) **रथेन रजसा ध्वस्तं गाण्डीवेनापकृत्तं** छिन्नं स्वसैन्यम् ॥ (५६) तुमुले **कांदिग्भूते** युद्धे। **पत्रं** वाहनम् ॥ (५७) **प्रजापतेः** स्रष्टुः। **कर्म** क्रियमाणम्। करचरणमुखनासिकाद्यवयवजातमवयवविधानतः प्राग् विकीर्णमिव ॥ (५९) **दस्यून्** दायादान् **उद्वर्तयन्** पराङ्मुखं कुर्वन्। **युगान्ते** प्रलये। **अन्यद्युगं** स्वीयां सृष्टिम्। **तप्ता** तप्स्यते ॥ (६३) **सांहितं**[2] संधिः ॥ (६५) **सागरं** सगरखातं **महोदधिं** समुद्रान्तरं **सलिलस्याप्रमेयम्** [अप्रमेय][3]जलम् ॥ [Fol. 75b] (६६) **श्वेतं** कैलासम् ॥ (६९) **सुदर्शनं**[4] चक्रम्। नग्नजितः सुतैर्मायया **बद्धं मुमोच** इत्यन्वयः। **ललामं** तिलकम् ॥ (७०) **कपाटे**[5] नगरे। **दन्तकुरे** पुरे। **अनाथा**[6] राजशून्या ॥ (७१) **जम्भं शैलमभिहत्य हतः** ॥ (७३) **सौभं** नगरम्। **खस्थम्** गगनचरम् ॥ (७६) **ऐश्वर्यवान्** अप्रतिहतेच्छावान्। **सिद्धिषु** कार्यसिद्धिषु ॥ (७७) **निम्लोचने**[7] नगरे। **पाशान्** मुरेण[8] प्रसारितान् ॥ (८२) **अस्मान् समीक्ष्य** अस्मत्स्नेहात्, अथवा अस्माभिस्तद्वधस्य प्रतिज्ञातत्वात् ॥ (८३) **पर्यागतं** क्रमप्राप्तम्। **मम कृष्णस्य कलहं यन्मन्यते** दुर्योधनः। यच्च पाण्डवानामुपरीति शेषः। **ममत्वं** स्नेहं **शक्यं हर्तुम्** इति मन्यते। **तद्वेदिता** वेदिष्यति **संयुगं**[9] युद्धं **गत्वा** ॥ (८५) **धर्मेण** क्षात्रेण। **नियतम्** अशश्रम्। तत्रास्मी[10]त्येवंवादिभ्यो वृत्तम्। **ग्रहे**[11] पणे ॥ (८६) **अद्य** वनवासनिवृत्तिसमये जीवतः पाण्डवाननाद्[Fol. 76a]त्य **कस्मान् नन्दिष्यन्ति**[12] ॥ (८७) **ते** यदि **अस्मान् जयेयुः** तदा **धर्मादधर्मो गरीयान्**। **कृतं** पुण्यं **साधु** सच्चरितं **च**[13] **नास्ति** ॥ (८८) **इमं** क्षेत्रज्ञं **कर्मबद्धं न** यदि **मन्यते**, यदि वा **अस्मान्** पुण्यकृतोऽपि **विशिष्टान्** न मन्यते तदा नास्तिकोऽसौ। नास्तिकं धर्मपराङ्मुखं **वासुदेवद्वितीयो** जेतुं प्रचरामः ॥ (८९) **इदं** शुभं **कर्म नरेषु न चेद्बद्धं** न चेद्विधिना नियतम्, नियतत्वेऽपि यदि **पुरुषस्य स्वकर्म** क्षत्रादिजातिप्रतिबद्धं[14] युद्धादि नास्ति, **तत्रापि**[15] तयोरपि पक्षयोः **समीक्ष्य** विचार्य **धार्तराष्ट्रस्य** दुष्टबलवादिनः **पराजयः साधुः**। दुष्टबलस्याप्यस्मास्वधिकत्वात् ॥ (९०) **हे कुरवो यद्ब्रवीमि वो** युस्मान् भावित्वेऽपि तत् **प्रत्यक्षम्**, स्फुटत्वाद्दर्शनस्य। तदेवाह—**युध्यमाना** इति। **अन्यत्र युद्धात्कुरवः** सन्तीति शेषः। **यु**[Fol. 76b]**ध्यतां** तु **परीप्सन** राज्यं प्राप्तुमिच्छन् **शेषः कश्चिन्नास्ति** इति ॥ (९२) **संवत्सराः** संवत्सरवेदिनः। **ज्योतिषि** ग्रहणे ॥ (९३) **उच्चावचम्** आगन्तुकलाभालाभम्। **दैवयुक्तं** शुभम्, पुरुषकारोद्यतस्याशुभम्। **रहस्यं** दशाफलम्। **दिव्यान् प्रश्नान्**[16] अस्मिन्नारम्भे इदं फलं भविष्यतीति। **मृगचक्रान्** शुभाशुभफलप्रदान् **मुहूर्तान्**[17] ॥ (९४) **संसिद्धार्थम्**[18] अवश्यंभाविनीम्। **अपरोक्षविद्यः** सर्वप्रत्यक्षदर्शी ॥ (९५) **अप्रमत्तः** अवहितः। **पुराणी** जन्मान्तरसंबन्धिनी। **न व्यथते** न हयिते ॥ (९६) **अनालब्धम्** अनास्पृष्टम्।

---

1 Ms. (corrupt) प्रविचितारः। Ed. प्रच्छेत्तारः। 2 Ed. विहितं। 3 Dropped in Ms; but so in Arj. 4 Ed. सुदर्शनीयं। 5 Ed. कवाटे। 6 Ed. विनाथा। 7 Ed. निर्मोचने। 8 Ms. सुरत्वे (corrupt). 9 Ms. तं युगं (corrupt). 10 So Arj.; Ms. तत्वास्ती। 11 Ed. ग्लहे। 12 Ed. ह्यकस्मात् and न मृष्यन्ते। 13 Ed. न। 14 Ms. °जातियुद्धप्रतिबद्धं। 15 Ed. तच्चापि। 16 Ed. दिव्याः प्रश्नाः। 17 Ed. मृगचक्रा मुहूर्ताः। 18 Ed. संसिद्धार्थः।

**जृम्भते**[1] उल्लसति । **उशन्ति** इच्छन्ति ॥ (९७) **शैक्यः** खड्गः ॥ (९८) **तरक्षुः** चित्रव्याघ्रः ॥ ( ९९ ) **सुवर्णपाता** गरुडाः ॥ ( १०२ ) **यैः** पाण्डवैः **सचिवैः** इन्द्रादीन् **सहायान् अवोचत तैः** एव पाण्डवैः **कलहं मन्यते** इति **मोहमस्य पश्यत** इत्यन्वयः ॥

## ४८

( ५ ) **व्यति**[ Fol. 77a ]**क्रान्तौ** उल्लङ्घ्य स्थितौ ॥ ( ६ ) **नोपतिष्ठेते** नाभिवन्देते ॥ ( ७ ) **अतीतौ** अतिशयेन इतौ प्राप्तौ ॥ ( १६ ) **आभजत्**[2] भग्नवान् ॥ ( २८ ) **उज्जातेः**[3] हीनजातेः ॥ ( २९ ) **आयुष्मता** इत्युपालम्भे ॥ ( ३३ ) **कत्थते** आत्मानं श्लाघते ॥ ( ३८ ) **प्रोषितो** देशान्तरं गतः ॥ ( ३९ ) **वृषायते** बलीवर्दवन्नर्दति ॥ ( ४१ ) **भद्रं ते** त्वत्संबन्धि भद्रमित्युपालम्भः ॥

## ४९

( १ ) **प्रत्यर्थेन** प्रतिकूलानामर्थेन ॥ ( १० ) **अनिमित्ततो** राज्यनिमित्तशून्यात् ॥ ( १४ ) **यैः** निमित्तभूतैः **अभ्ययुङ्क्षत**[4] अभियोगं कृतवन्तः ॥ ( २५ ) **विजयेन** अर्जुनेन ॥

## ५०

( ८ ) **शैक्यां** हुतायःकृतशिक्याम् ॥ ( १० ) **रभसः** अपरीक्षितकर्मा ॥ ( १८ ) **निष्ठुरः** क्रूरः ॥ ( १९ ) **प्रादेशो** विततर्जन्यङ्गुष्ठप्रमाणम् ॥ ( २४ ) **निष्कीर्णा** कृतकुटिलकीर्णाम् । **शतसंह्लादाम्**[5] अनेकरावाम्[6] ॥ ( ३४ ) **भग्नपुष्करान्** भग्नकराग्रान् ॥ ( ४७ ) **दिष्टं** दैवम् ॥ ( ५० ) **अपचितिं** शोधनम्[7] ॥ ( ५८ ) **पर्यायधर्मः** क्रमधर्मः । **प्रधिः** [ Fol. 77b ] नेमिः ॥

## ५१

(२) **प्रतीयात्** प्रतिगच्छेत् ॥ (३) **प्रत्येता** निवारयिष्यति ॥ (४) **प्रतीयातां** प्रतिगच्छेताम् । **माहात्म्यात्** महत्त्वात् । तत्रापि **संशयः** प्रतिगन्तुं शक्नुतो न वेति, न पुनर्विजेतुं शङ्कापि ॥ ( ५ ) **घृणी** कृपालुः । **प्रमादी** अनवधानवान् । स्थविरत्वाद् अक्षमः । गुरुत्वात्पक्षपाती । **समर्थः** शक्तिमान् । **बलवान्** बलवद्दशायां वर्तमानः । **तुमुले**[8] कांदिग्भूते **युद्धे** । **अपराजितः**[9] अपराजित एव भवेत् । तु-शब्दोऽवधारणे ॥ ( ६ ) **सर्वे** पाण्डवाः । **तयोः** द्रोणभीष्मयोः ॥ (७) संशय्य निर्णयति—**न तु** इति ॥ ( ९ ) **त्रयस्त्रिंशत्समा** वर्षाणि यस्य ।

---

1 Ed. जृम्भति । 2 Ed. आरुजत् । 3 Ed. दुर्जातेः । 4 Ed. अभ्ययुञ्जत । 5 Ed. शतनिर्ह्रादां । 6 Ms. अनेकरावाह्वां । 7 Ms. शोभनं । 8 Ed. तुमुलं युद्धं । 9 Ed. अपराजयः ।

( १० ) **यन्ता** सारथिः ॥ ( ११ ) **अधिज्यम्** आरोपितगुणम् ॥ ( १३ ) **अस्ता मुक्ताः** ॥ ( १९ ) **तस्य**[1] अर्जुनस्य **रणाग्रेषु**[2] **बहून्**[3] जयप्रतिबद्धान् **प्रकारान् कुरूणाम् आवसथे श्रोतास्मि**[4] । **तेषां** कुरूणाम्, भङ्गप्रतिबद्धान् [ Fol. 78a ] इति शेषः । सर्वमन्यत्समम् । तत्र हेतुः—**क्षयः किलायम्** इति ॥

## ५२

( १ ) **अभिसरा** अग्रेसराः ॥ (७) **अमानुषं** दिव्यम् । **कूलम्**[5] आश्रयं कृष्णलक्षणम् । **अन्तरा** लोकद्वयमध्ये । **विततं** विस्तृतम् ॥ ( ९ ) **योज्यैः** प्रेष्यैः, **योजकैः** तदधिकृतैः ॥ ( १० ) **नैभृत्येन** स्थिरतया । **वदान्यो** मृष्टमुक्त्वा दाता ॥ ( १२ ) **पतिष्यति** गमिष्यति ॥ ( १३ ) **तनुः** क्षीणदोषत्वात् । **उच्चो** गुणबाहुल्यात् । **शिखी** तेजस्वित्वात् । **मिथ्योपचरितो**[6] द्यूतेन ॥ ( १५ ) **शान्तिः** मतेति शेषः ॥ ( १६ ) **शिष्यमाणानां**[7] याचताम्[8] । याचतोऽस्माननादृत्योपेक्षां न कुर्यादित्यर्थः । तत्र हेतुः—**जुगुप्सते**[9] इति । **मामेव** पितृभूतं **कारणमुद्दिश्य** निन्दति युद्धमिति शेषः ॥

## ५३

( २ ) **इदं तु नाभिजानामि** केन हेतुनेति शेषः ॥ ( ५ ) **कुमारवद्** बालवत् ॥ ( ६ ) **उच्यमानान्** तव पुत्रैरिति शेषः । **उपेक्षसे** उपेक्षितवानसि ॥ ( १२ ) **अस्यतां** [ Fol. 78b ] क्षिप्यतां शरानिति शेषः ॥ ( १९ ) **अनीशेन** असमर्थेन राष्ट्रं दातुं ताम् हन्तुं वा ॥

## ५४

( ५ ) **संहत्य** मिलित्वा ॥ ( ११ ) **प्रणिपातो** वा **पलायनं** वेति वा-शब्दाध्याहारात् ॥ ( १८ ) **अभिद्रुग्धा** अभिद्रुह्यन्ते स्म [ **परे** ][10] पाण्डवाः चेद् यदि **नः** अस्मान् ॥ ( २४ ) **एकार्थाः** एकप्रयोजनाः ॥ ( २६ ) **परेषां विकत्थने** मिथ्यागुणाख्याने ॥ (२८) **अक्षय्यरूपा** क्षेतुमशक्या ॥ ( ३२ ) **युक्तः** समाहितः । **दुःखोचितो** दुःखसहः ॥ ( ३३ ) **दुर्योधनसमो गदायां** मच्छिष्यो **नास्तीति संकर्षणस्य निश्चयः** । यत् चेतःप्रभृति **एनं** शिष्यत्वेन **उपाविशं**[11] तदाप्रभृति ॥ ( ४१ ) **तुल्यरूपा विशिष्टाश्च** अर्जुनापेक्षया ॥ (४५) **अङ्गशः**[12] अङ्गेऽङ्गे ॥ ( ५६ ) **शंतनोरधि** शंतनुसदृशः ॥ ( ५४ ) **प्रयुतं**[13] लक्षम् ॥ ( ५५ ) **संशप्तानि** शपथाः ॥

---

1 Ed. तथा । 2 Ed. रणाग्रे । 3 Ed. सुबहून् । 4 Ms. **अवशक्ये** श्रोतासि ( corrupt ) 5 Ed. जालं. 6 Ed. reads differently. 7 Ed. शिक्षमाणानां । 8 Ms. याजतां ( corrupt ). 9 Ed. जुगुप्सति । 10 Dropped in Ms. 11 Ed. उपावसं । 12 Ed. reads differently. 13 So Arj.; Ms प्रस्तुतं ( corrupt ); Ed. अयुतं ।

( ५६ ) **तान्** भीष्मादीन् । **सव्यसाचिवधे अलं** समर्था इति पार्थिवा **मन्यन्ते** । **व्यथते** बिभेति ॥ ( ६३ ) **त्रिगुणतः** तृतीयांशेन । [ Fol.79a ] **त्रिगुणा** त्रिगुणेन भागेनाधिका ॥ ( ६६ ) **विधित्सुः** बिचिकीर्षुः ॥

५५

( १ ) **अर्चति**[1] पूजयति ॥ ( ५ ) **पूर्वरूपं** चिह्नम् ॥ ( ७ ) **भौवनः** श्रेष्ठः[2] ( ? ) । **चित्तं** [ क्रिया]या[3] विशेषणम् ॥ ( ११ ) अग्नियुक्तो धूमः **अग्निधूमः** । **रुध्वा** व्याप्य । **न चेत् न भारो** गौरवं **रोधो** निरोधः ॥ ( १३ ) **ऋश्यप्रख्या** मृगवेगाः ॥

५६

( १ ) **प्रत्यर्थेन** परभावेन ॥ ( १३ ) **विषमौ** अतुल्यौ ॥ ( २२ ) **सुबलात्मजं** शकुनिम् ॥ ( ३६ ) **स्वो** भवाव ॥ ( ३९ ) **पृथ्वी पाण्डवा**[4] च भोक्तुं हन्तुं च **मदर्थे सृष्टा** धात्रेति शेषः ॥ ( ४१ ) **निवारयिष्यन्ति**[5] **एणेयान्** बालमृगान् **तन्तुना** रज्वा ॥ ( ४८ ) **कवचहृदे** कवचैरगोचरे ॥ ( ५० ) **निरोत्स्यामि** निरोधविषयीकरिष्यामि ॥ ( ५२ ) **समर्थं पर्याप्तम्** इति पर्यायाभ्यां सामर्थ्यातिशयमाह । **संविधातव्यम्**[6] अनुरूपं करणीयम् ॥ ( ५६ ) **कुलन् प्रातिपेयान्** इति गुणवत्कुलपुरुषोद्भावनेन गुणवत्ता[Fol. 79b]माह ॥

५७

( ६ ) **इमां** पाण्डवसेनां **स्वामेव अवेक्षस्व**[7] जानीहि । **आस्रावः**[8] क्षतिः ॥ ( २१ ) **प्रतीपं** विपरीतम् । **इव**-शब्दोऽवधारणे । **युयुधानेन** [ सात्यकि]ना[9] । **भारती** कुरुसेना । **सीमन्तिनी** सीमन्तिनीव भिन्ना[10] ॥ ( २२ ) **माधवः** सात्यकिः ॥

५८

( ३ ) **पादाङ्गुलीरभिप्रेक्षन्** इति दृष्टिचापलपरिहारमाह । [ **प्रय**]**तो** बाह्याभ्यन्तरे पूतः । **शुद्धान्तम्** अन्तःपुरम् ॥ ( ५ ) **मध्वासवो** माध्वी सुरा तेन **क्षीबौ** मत्तौ ॥ ( १२ ) **निदेशस्थौ** आज्ञावशवर्तिनौ ॥ ( १३ ) **सत्कृतः** पूजितः । **आच्छन्नो** वस्त्रभूषणैः । **लब्धसत्क्रियो** वागुपचारेण । **संदेशं** वचनम् ॥ ( १६ ) **ह्लादिनीम्** आनन्दिनीम् ॥ ( १७ ) **इष्टार्थां** माधुर्यात् । **हृदयदारणीं**[11] कार्कश्यात् ॥ ( १८ and २५१* ) **धृतराष्ट्रमभिवादयन् सुखं वचः, यवीयसः** कनिष्ठान् **कौशल्यं सुखं च वचो ब्रूहि** इत्यन्वयः । **उत्तरम्** उत्कृष्टम् ॥

1 Ed इच्छति । 2 Perhaps corrupt : it should be त्वष्टा । 3 Lacuna in Ms. 4 Ed. पृथिवी पाण्डवान् । 5 Ed. आवारयिष्यन्ति । 6 Ed. यद्विधातव्यं । 7 Ed. समवेक्षस्व । 8 Ed. स्रावः । 9 Lacuna in Ms. 10 The Ms. reads : सीमन्तिनीव सीमन्तिनीभिन्ना ! 11 Ed हृदयशोषिणीं ।

( २० ) **कामजान्** औरसान् । [ **प्रियेभ्यः** ][1] **प्रिया**[ Fol. 80a ]र्थम् । [ **राजा हि** इति ][1] निर्विशेषेण राजपदेन युधिष्ठिरं वदन् राज्यानर्हत्वं कौरवाणामभिप्रैति ॥ ( २३ ) **प्रार्थयितुं** याचितुं युद्धमिति शेषः । **विपरीतः** शत्रुः [ **परी**]**तो**[2] मित्रम् ॥ ( २४ ) **समरे** युद्धेऽपि[3], जेतुमशक्यत्वात् ॥

## ५९

( १ ) **संख्यातुं** विचारयितुम् ॥ ( २ ) **सौक्ष्म्येण** निपुणतया ॥ ( ४ ) **शक्त्या** त्रिविधया **तेजसा** प्रतापेन **पाण्डवान्, कुरून् अल्पतरतया शक्त्या** प्रसंख्याय इत्यन्वयः ॥ ( ७ ) **एवमेव** स्वभावमिति शेषः । तमेव स्वभावमाह–**इच्छन्ति** इति । **प्रतिकर्तुं** प्रत्युपकर्तुम् ॥ ( ८ ) **साचिव्यं** साहाय्यम् ॥ ( ९ ) **जातगृध्या** पुत्रप्रीत्या ॥ ( १३ ) **धूमवतो** वह्नेः **गतिः** अवगतिर्यस्मिन् तत्साद्दश्यात् । **चतुरन्तायां** मह्याम् ॥ ( १४ ) **महामेघमहाशनि**-शब्दाभ्यां त[योः शब्दौ ल] क्ष्येते[4] ॥ ( २१ ) **समः**[5] साम ॥ ( २२ ) क्षयस्योदयः **क्षयोदयः** ॥

## ६०

( ३ ) रागद्वेषसंयोगाभावात् । **भावानां** सत्त्वानाम् **उपेक्षया अलंबुद्ध्या** । तत्र हेतुमाह–**लोभा**[ Fol. 80b ] [ **द्रोहा**]**द्**[6] इति । लोभद्रोहौ दोषौ सत्त्वानामुपेक्षाहेतुरित्यर्थः ॥ (८) **देवेषु** यदि लोभो द्वेषो वा **लक्ष्यते** तयोरेव **प्रामाण्यात्** ताभ्यां लिङ्गभूताभ्या[मित्यर्थः ][7] । **तेषां** देवानां न देवत्वं **विक्रमिष्यति** प्रभविष्यति ॥ ( ९ ) **अभिमन्त्रितः** पाण्डवान् भोक्तुमिति शेषः ॥ ( १० ) तेन मदनुकूलत्वं किमिति न वर्णयसि ।...[ **दे** ] **वेभ्यो भूयो** बहुतरम् ॥ ( ११ ) स्वस्य मन्त्रशक्तिं दर्शयति–**विदीर्यमाणाम्**[8] इति ॥ ( १४ ) देवासुरभावप्रवर्तकः **अहमेकः** ॥ ( १५ ) **प्रवर्तन्ते** आविर्भवन्ति ॥ ( १७ ) **निकामम्** अनवरतम् ॥

## ६१

( १५ ) **किल** इत्युपालम्भे । भीमसेनभुजभारं सोढुमशक्नुवन् प्रतिज्ञां कृतवान् ॥ (१६) आवन्त्यादिषु सत्सु **अहं हनिष्यामि परेषां योधान्** इत्येतमपि प्रतिज्ञाभारं वोढुमशक्नुवन् प्रतिज्ञाव्याजेनापसृतवान् ॥ ( १७ ) **ब्रह्म ब्रुवाणो** ब्राह्मणोऽस्मीति वदन् ॥

## ६२

( ३५५* ) **शमेन** उपशमेन । **वर्चसा**[9] तेजसा ।......[ Fol. 81 missing ].

1 Dropped in Ms. 2 Lacuna in Ms. Ed. यो न कालपरीतो । 3 Ms. श्रमयुद्धेऽपि (!) । 4 So Arj. for the lacuna in Ms. 5 Ed. शम० । 6 Lacuna in Ms. Ed. transp. द्रोहात् and लोभात् । 7 So Arj. for the lacuna in Ms. 8 Ed. प्रदीर्यमाणां । 9 Ed. समेन and वयसा ।

[ Fol. 82a ] ( Passage in App. I, No. 3 ). ( L. 21 ) **शुद्धं** मनसः शुद्धिः॥ ( L. 22 ) **अलोलुपः** अलम्पटः। **अल्पेच्छः** प्राणयात्रामात्रसाधने तुष्टः। **कामानामविचिन्तिता** विषयाणाम......। ( L. 23 ) **समुद्रतुल्यः**[1] गाम्भीर्यादियुक्तः॥ ( L. 24 ) **सुवृत्तः** शोभनचरितः प्रयोजननिरपेक्षा स्वभावतः प्रवृत्तिः, सा चोत्सर्गतः शुभा प्रवृत्तिरिति **शीलम्** उच्यते। **प्रसन्नात्मा** रागादिभिरमलिनचित्तः। **आत्मवित्** क्षेत्रज्ञदर्शी। **बुधः** तत्प्रतिपादकशास्त्रवित्॥ ( L. 26 ) **सर्वभूतेभ्यः** अभयं **यतो** यस्येति षष्ठ्याम्, **सर्वेषां यतो** यस्मादिति पञ्चम्यां तसिल्-प्रत्ययः॥ ( L. 29 ) **प्रज्ञा** आत्मसाक्षात्कारः। **तृप्तो** निराकाङ्क्षः। **शाम्यति** निर्वाणं गच्छति॥ ( L. 30-31 ) **पूर्वं** प्रथममेव शिष्टाचरितं तत्कालकृतं तयोरेकम् **आस्थाय** गृहीत्वा **मोदन्ते** नापूर्वकर्मारम्भश्रमेण खेदयन्त्यात्मानम्॥ ( L. 32 ) नैष्क [र्म्यं कर्मत्यागं ] [ Fol. 82b ] संन्यासं वा॥ ( L. 33 ) **कालाकाङ्क्षी** आयुःशेषदर्शी। **चरन्** पर्यटन्। **ब्रह्मभूयाय** ब्रह्मभावाय॥ ( L. 36-37 ) **उत्सृज्य**[2] **गृहान्** गृहारम्भमकृत्वैव ब्रह्म[ चर्या ]देव प्रव्रज्येति पक्षान्तरम्। **तेजोमयाः** ज्ञानमयाः॥

( ६ ) **पूर्वेषां** सकाशादिति शेषः॥ (८) **विहायो** नभः॥ ( १३ ) **संदितौ**[3] खण्डितौ। **विगृह्य** युद्धं कृत्वा॥ ( १४ ) **अपरिज्ञातः** अलक्षितः शकुनिभ्याम्॥ ( १६ ) **संकथनं** कृतानुवादः। **संप्रश्नः** कर्तव्यविषयः। **समागमः** एकस्मिन्मेलकः॥ ( १८ ) **समास** [ **ते** ]... हिंसित्वा॥ ( १९ ) **धूमायन्ते** मन्दतेजसो भवन्ति। **व्यपेतानि** असंहतानि। **ज्वलन्ति** तेजोयुक्तानि भवन्ति॥ ( २१ ) **विद्यया** मन्त्रौषधिप्र [योगल] क्षणया[4] **जम्भकाः** कुहकेन **वाहिका**[5] धातुवादिनः॥ ( २२ ) **कुञ्जभूतं** कुञ्जतां गतम्, लतादिना पिहितोदरतां गतम्॥ ( २३ ) **तच्च**[6] **पश्यामहे अ[माक्षिकं मधु। पीतं** ][7] [ Fol. 83a ] पीतवर्णम्। **मरुत्प्रपाते मरुतां** देवानां **प्रपाते** भृगौ। **कुम्भसंमितं** कुम्भप्रमाणम्॥ ( ३१ ) **अङ्के** उत्सङ्गे॥

## ६३

( ४ ) **तर्कयसे** संभावयसि, जेतुमिति शेषः॥ ( ८ ) **प्रतिमानेन** निश्चितेन मानेन उत्कर्षेण वा॥ ( ११-१२ ) हे **तात सतां वाक्ये तिष्ठ तितिक्षस्व भीष्मं मां च शुश्रूष** इत्यन्वयः॥

## ६५

( २ ) **रहिते** [ **एकान्ते** ][8]॥

## ६६

( १ ) **कामात्** इच्छातः। **अन्यत्र** बदरिकाश्रमात्, भारते वर्षे। **सर्वाभावाय** सर्वक्षत्र-

1 Ed. समुद्रकल्पः। 2 Ed. उत्सृज्य। 3 Ed. संधितौ। 4 Lacuna in ms. 5 Ed. वातिकाः। 6 Ed. तत्र। 7 Lacuna in Ms. 8 So Arj. for lacuna.

विनाशाय। **संमितौ** पुराणेषु विदितौ ॥ (२) **द्यां** दिवम्। [**अन्तरम्** अन्त]रिक्षलोकम्[1]। **चक्रं** कालचक्रम् ॥ (३) **सापह्नवं** सस्नेहम्। **पाण्डवानां तु संमतम्**[2] इति परस्परं स्निग्धम्। (५) **विशिष्टात्मा** ईश्वररूपः ॥ (९) **यतो** यस्मिन् ॥ (१०) [**विचे**][3]**ष्टयति** परितो विवृणोति। तत्र हेतुः–**भूतात्मा** इति। **आत्मा** व्यापकः॥ (११) **सत्रं** व्याजम् अभिचारयागं वा। **संमोहयन्** पाण्डवाः कुर्वन्ति [नाहमिति][4]। [Fol. 83b] (१२) **कालचक्रं** ऋत्वादि। **जगच्चक्रं** भूर्भुवःस्वरादि। **युगचक्रं** कृतादि। चक्रत्वं पुनरावृत्तिमत्त्वात्। **आत्मयोगेन** उपाय[भूतोत्मना][4] ॥ (१३) **कालस्य** दिनादेः **मृत्योः** यमस्य। **जङ्गमस्थावरस्य** संहरणीयस्य ॥ (१४) **ईशन्** इच्छामात्रेण कर्तुमकर्तुमन्यथाकर्तुं [शक्नुवन्][5]। **कीनाशो** दरिद्रः। **दुर्बलो** विद्यादिबलहीनः ॥ (१५) **तेन** इच्छया शक्तस्यापि कर्मयोगलक्षणेन मायाबलेन ॥

## ६७

(२) **विद्यां**[6] जा[नीयाम्][7] ॥ (३) **त्रीणि युगानि** युग्मानि यस्मिन्। तेजोबले वीर्यपराक्रमे धर्मज्ञाने, संधिविग्रहौ यानासने संश्रयद्वैधीभावौ वा। **अकृतं**......... ॥ (५) [**मा**]**यां** वञ्चनम्। **वृथा** परप्रतीत्यर्थम्। **शुद्धो भावो** रागद्वेषमध्यस्थता तं **गतः** प्राप्तः। **भक्त्या** तत्परतया। **शास्त्राद्वेद्मि** न हेतुवादात् ॥ (७) **चेद्** अवधारणे ॥ (८) **अवाक्** अधः ॥ (१०) **अर्दयन्**[8] छिन्दन् ॥ ......[Fol. 84 missing][9].

[Fol. 85a] (१२) **पुराणम्** ईश्वरम्। **नवं** देवकीपुत्रम् ॥ (१३) **सिता** बद्धाः। (१४) अन्धो नेता हस्तधारको[10] येषां ते **अन्धनेत्रा** राजादित्वादन्तता [कारा] ॥ (१५) एक एव सहाय[हीनः] अयतेऽनेनेति **एकायनः**। **तं** पन्थानम्। **मृत्युं** यमम्। **महान्** महद्रूपः[11] तत्त्वदर्शी ॥ (१८) **उदीर्णानां** प्रबलानाम्। **कामत्यागो** येन कामेन [प्रेर्य]न्ते[12] तत्त्यागः। **अप्रमादः** अनवधानम्, तत्त्वविषयदोषदर्शनम् ॥ (१९) **शमे**[13] उपशमे। **मा च्यवताम्**[14] आत्मतत्त्वादिति शेषः। **नियच्छ** निगृहाण दोषदर्शनेन **एतान्**[15] विषयान् ॥ (२०) इंद्रियनिग्रहं स्तौति–**एतद्** इति ॥ (२१) **आगमो** विततः श्रुतः। **योगाद्** एकाग्रलक्षणात। **वशे**[16] स्वतन्त्रतामुपगते। **तत्त्वे** अव्यये, चित्तादनपायिनि इति यावत्। **प्रसीदति** साक्षात्कार[17]-विषयतां प्रतिपद्यते ॥

## ६८

(१) **मे** मह्यम्। [**नामकर्मार्थवित्**][18] [Fol. 85b] **नाम्नां** विष्णुप्रभृतीनां

---

1 Lacuna in Ms. 2 Ed. सुसंमतं। 3 Lacu-na in Ms. 4 So Arj. for the lacuna in Ms. 5 Lacuna in Ms. 6 Ed. विद्या 7 Lacuna in Ms. 8 Ed. वर्धयन्। 9 As the commentary is almost continuous, it is possible that no folio is lost, but that the numbering of folios has gone wrong. 10 So. Arj. but the Ms. is corrupt and reads **हस्त्राधारो**। 11 Ms. महद्भूय (corrupt). 12 Lacuna in Ms. 13 Ed. यमे। 14 Ed. च्यवतु। 15 Ed. एतां। 16 Ed. **वशी**। 17 Ms. साक्षाद्विकार। 18 Lacuna in Ms.

**कर्माणि** व्याप्त्यादीनि **अर्थात्** मूर्तिविशेषाद् **वेत्ति** इति॥ ( २ ) **यावत्** परिमितं **जानामि** स्मरामि, न तु [ सर्वम्। तत्र हेतुः– ][1] **अप्रमेयः** इति॥ ( ३ ) **वसनात्** स्थितेः। **वसुत्वात्** तेजोरूपत्वात्। **देवयोनितः** देवानां दीप्तिरूपाणां कारणत्वात्। नृपत्वात् ( ? )... . ॥ ( ४ ) [ **मौना**]**द् ध्यानाद्** इति निगमः, न च शब्दसाधर्म्यमात्रादर्थान्तरप्रतिपत्तिः। अस्ति च माधवे मौनध्यानयोश्च मकारधकारयोः साधर्म्यम्। **योगाद्** ध्यानरूपात्। सर्वे गत्यर्था ज्ञानार्था इति न्यायात्। **तत्त्वानि** महदादीनि तेषामस्मिन् **लयात् मधुहा मधुसूदनः**॥ (५) **कृषिर्भूवाचकः शब्दः** इति कृषिः कृषिधातुः, भवत्यस्मिन्निति भूरात्मा, तद्वाचकः प्रकृतिभागः। **निर्वृति-वाचकः** निर्वर्त्यते परिक्रम्यते भूरात्मा अ[नेन]......[ Fol. 86 missing ]

## ७०

[ Fol. 87a ] ( ३१ ) **न तरन्ति**[2] नातिक्रामन्ति। **निगर्हणां** निन्दाम्॥ ( ३२ ) **मन्युः** शोकः॥ ( ३३ ) **अनुयाय**[3] अनुगम्य। **संकरं** पापं यौनादिविप्लवम्॥ ( ३८ ) **अह्रीको नैव स्त्री** स्त्रीधर्माणां लज्जायाः प्रधानत्वात्। **विमूढो नैव पुमान्** पुंधर्माणां विवेकस्य प्रधानत्वात्। अनुभयत्वान्नपुंसकम्॥ ( ४२ ) **प्रशान्ताः** त्यक्तक्रोधाः। [ **समभूताः** ? ][4] एकतां गताः॥ ( ४६ ) **क्षत्रबन्धवो** निन्दितक्षत्रियाः॥ ( ४७ ) **कपालं** भिक्षापात्रम्॥ ( ४८ ) **यथायं गतो**[5] यं प्रकारं प्राप्तः॥ ( ४९ ) **कलिः** कलहः, चतुर्थयुगावतारो वा। [ **बलं** से]ना[6]। तदपि **नीतिमात्राय** नीतिरक्षणाय। **हठे दैवे** बलोद्योगोत्कर्षेण वा॥ ( ५० ) **छन्देन** इच्छया॥ ( ५२ ) **अपयाने**[7] पलायने॥ ( ५३ ) **हतस्य** मारितस्य। **समौ** उभय-फलसंबन्धात्॥ ( ५५ ) **दयितं** प्रियम्। **अङ्गावरः** ( ? )[8] पुत्रः। **निर्वेदो** वैराग्यम्॥ ( ५६ ) **यवीयान्** कनिष्ठः॥ ( ५७ ) **अनुशयः** पश्चात्तापः। **अनुबन्धो** वैरप्रवाहः। **पापः** पापहेतुत्वात्। **शेषस्य**[9] मृतेभ्योऽवशिष्टस्य॥ ( ५९ ) **प्रसृजति** उत्पादयति। ( ६० ) तत्र हेतुः— **दुःखम्** इति। **अनिर्वृतेन** सशङ्केन॥ ( ६२ ) **आख्याता**[ रः...पू ] [ Fol. 87b ]र्ववृत्तकथनेन वैरदीपकाः॥ ( ६४ ) **अतः** शेषस्थितेरप्यन्यथाभावादिति यावत्। **शान्तिः** सुखम्। **अन्तरं** छिद्रम्। **अन्ततः** शेषात्॥ ( ६५ ) **पौरुषेयः** पुरुषसंबन्धात्सर्वाभिभावकः। **आधिः** मन-स्तापः। **तस्य** वैरस्य। **मनसो निवृत्त्या** बलवत्प्रतीकारदृष्टिकृतया॥ ( ६६ ) **मूलघातेन** वैरनिदानत्यागेन। [ **फलानां नि**]**र्वृत्तिः**[10] निष्पत्तिः। **इद्धा** पुष्टा। **न नृशंसान्तरं**[11] **भवेद्** बहुमारणाभावात्॥ ( ६७ ) **त्यागेन** वैरमूलत्यागेन। **शान्तिः** वैरनिवृत्तिः। **तदृते** इद्धां फलनिष्पत्तिं [ विना शा]न्तिरपि[12] **वध एव स** इति वधविशेषणम्। वैरे सति दोषमाह— **संशयाद्** इति। **संशयाद् द्विषतां च आत्मनो** वा द्वयोरेव वेति संशयः॥ ( ६८ ) तत्फल-[ बाहुल्यं ][12] **प्रणिपातेन** अञ्जलिबन्धादिना गुरुतरदैन्यहेतुत्वात्। **सर्वथा** परोक्त[13]प्रकारा-

1 So Arj. for lacuna. 2. Ed. प्रतरन्ति। 3 Ed. reads differently. 4 Lacuna in Ms. 5 Ed. यथागतः। 6 So Arj for lacuna. 7 Ed. व्यपयाने। 8 Arj. reads अजावरः ( ? )। 9 Ed. शेषश्च। 10 Lacuna in Ms. 11 Ed. तन्नृशंसतरं। 12 So Arj. for the lacuna. 13 Ms. परोक्तयावत् ( ? )।

नुमत्यापि ॥ ( ६९ ) **अयुद्धं** युद्धानारम्भम् । **सान्त्वे** शान्ति...... । [ **अपराक्रमं** सा]न्त्व-प्रयोक्तुः पराक्रमहीनम् ॥ ( ७० ) **सान्त्वस्य प्रतिघाते** अशक्तोऽयमिति धिया । एकस्य दारुणाकारेण परिणतत्वाद् **गोपादे** सामवर्जि[ते ॥ ( ७१ ) **लाङ्गू**][1][ Fol. 88a ]-**लचालनं** दैन्यसूचकम् । **क्ष्वेडो** याच्ञाध्वनिः । **प्रतिरावः** प्रतिकूलवासनम् । **विवर्तनं** भूमौ लुण्ठनं सव्यासव्यकायपरिवर्तनं वा । **दन्तदर्शनं** युद्धाय शस्त्रदर्शनम् । **आरावः** परतर्जनाय गर्जनविशेषः ॥ ( ७३ ) **सर्वथा** सर्वप्रकारम् **एतत्** लाङ्गूलचालनादिकं **दुर्बलेषु बलीयसा-मुचितं** तेषां दैन्यास्पदत्वाद्बलवत्तया प्रसिद्धत्वात् । दुर्बलेषु पुनर्लाङ्गूलचालनादिदैन्यसूचकेन । विरोधे सति **प्रणिपाती** प्रणिपतनशीलः दुर्बलः । **हि** यस्मात् ॥ ( ७७ ) **उपसंप्रश्नः** एकान्ते प्रश्नः ॥ ( ७९ ) **वां** युवयोः ॥ ( ८५ ) **अवाच्या** अपवादशून्याः ॥ ( ८७ ) **असांप्रतम्** अयुक्तं यथा भवति । **धीयते** पुष्यते ॥ ( ८८ ) **अन्ततः** शेषे । ( ९० ) [ **सुमनसः** ][2] प्रीतमनसः **स्याम** भवेम ॥

## ७१

( ३ ) **नैष्ठिकं** वैधम् ॥ ( ६ ) **युद्धेन** विना तृणमपि न प्रयच्छन्तीत्यत्र हेतुमाह— **अभिगृद्धा** इति । **अभिगृद्धा** लुब्धाः । [ **कृतस्नेहा** राज][3] [ Fol. 88b ]सु । **सहोषिता** राजभिः ॥ ( ७ ) **पर्यायो** हेतुक्रमो वा ॥ ( ९ ) **अनुक्रोशः** पश्चात्तापो लोकापवादो वा । **कार्पण्यं** दीनता दया वा ॥ ( १० ) [ **निमित्तं** ][4] वैरकरणे **एतदेव** । **पाण्डवाः** पाण्डोर्हिता भीष्मादयो **यथा** येन प्रकारेणात्मभूताः **त्वयि** इति यावत् । एते चेदस्य युधिष्ठिरस्य तस्मा [ द्युधिष्ठि]र एव भविष्यतीति वैरकरणम् ॥ ( ११ ) **पश्यताम्** इत्यनादरे षष्ठी । पश्यतः अनादृत्य इत्यर्थः ॥ ( १२ ) **अनुव्रतम्** अनुगतं धृतराष्ट्रस्येति शेषः । [ **उपधिना** ][4] छद्मना ॥ ( १४ ) **सकनीयसं** कनीयःसहितम्, त्वामिति शेषः । **श्लाघमानः** स्वमिति शेषः ॥ ( १६ ) **प्रकृतिं** भिक्षाचरत्वम् । **नष्टप्रकृतयः** अप्रजत्वात्[5] ॥ ( २२ ) [**ईषत्का**]**र्यः**[4] अयत्नसाध्यः । **प्रस्कन्दनं**[6] जलाघातः, तेन **प्रतिस्तब्धः** अवाक्पतितः ॥ ( २३ ) **मा विचिकित्सथा** मा संशयं कृथाः ॥ ( २५ ) **द्विधाभावः** संशयः ॥ ( २६ ) **प्रातिपौ**[ Fol. 89a ]**रुषिकान्** असामान्यान् । **व्यतिक्रमा** अपराधाः ॥ ( २८ ) **संप्रतिपत्स्यन्ते** निश्चयं करिष्यन्ति ॥ ( ३१ ) **हते** लोका-पवादेन ॥ ( ३२ ) **यात्वा** गत्वा । **चेष्टितं** जयपराजयचिह्नम् ॥ ( ३३ ) हस्त्यश्वप्रभृतीनां **प्रवृत्तिं** वार्तां **युद्धावधारिकां**[7] युद्धप्रवर्तिनीम् ॥ ( ३५ ) **न चेद्**[8] यदि ॥ ( ३६ ) **पत्रं** वाहनम् ॥

## ७२

...... यात् ॥ ( ४ ) **अनेयः** अविधेयः ॥ ( ६ ) **अवाचीनो** विपरीतः ॥ ( ७ )

1 Lacuna in Ms. 2 Lacuna in Ms. 3 So Arj for the lacuna. 4. Lacuna in Ms. 5 Ms. अत्यजत्वात् । 6 Ed. प्रस्कम्भम् । 7 Ed. युद्धाधिकारिकां । 8 Ed. नो चेत् ।

**तुन्नो** व्यथितः ॥ ( ९ ) **ज्येष्ठः** अधिकः ॥ ( ११ ) **ज्ञातीन्** सगोत्रान् । **सुहृदः** [ स्नेह ]-पात्राणि[1] । ......न्[2] ॥ ( १२ ) **पर्यायकाले** दानवान् वर्जयित्वा धर्मो गतः । दानवा निर्मर्यादा यत्राभूवन्नित्यर्थः ॥ ( १७ ) **युगान्ते** प्रलये ॥ **मा स्म नशन्** [ मा न]श्यन्तु[3] ॥ ( २१ ) **उदासीनवृत्तिः** एकस्वाम्यभावः[4] ॥

## ७३

( २ ) **रामो** हली ॥ ( ४ ) **मिमर्दिषुः** मर्दयितुमिच्छुः । **अन्यदा** इमं कालं वर्जयित्वा सर्वस्मिन् [ काले । ][3] ( ५ ) [**न्युब्जः** ] [ Fol. 89b ] अधोमुखः । **रुषतीं**[5] परुषाम् ॥ (६) **अग्निवर्णेन** अग्नितुल्येन ॥ ( ७ ) **निष्टनन्** शब्दं कुर्वन् । **अतद्विदः** अकोविदः ॥ ( ८ ) **आभज्य**[6] ईषद्भक्त्वा । **नि[र्मूलान्** मूला]च्चालयित्वा[7] । **परिरुजन्**[8] नमयन् ॥ ( ९ ) **क्षियसे**[9] निवससि ॥ ( १० ) **अकस्मात्** हेतुं विना । **स्मयमानो** हसन् । **आस्ते**[10] तिष्ठति । **प्रमी[लितः** स्तिमि]तः[3] ॥ ( ११ ) **मन्युकारितं** क्रोधानुभाव इति यावत् ॥ ( १२ ) **शुक्रो**[11] भास्वरः । **उच्चरन्** उद्गच्छन् । **पश्चात्** शेषे । **निर्मुक्तो** रश्मिभिरिति शेषः । [ **पर्येति** अस्त]मेति[3] । **ध्रुवं** सत्यम् । उद्गमनेऽस्तमने स्थितं दृष्टान्तम् ॥ ( १४ ) **आलभसे** स्पृशसि । **धीयते** पुष्टा भवति ॥ ( १५ ) **प्रतीपानि** विपरीतानि । शमवचना[नि **अप्र**]**तीपानि**[3] अनुकूलानि **विन्दति** लभते ॥ ( १६ ) **स्वप्नान्ते** स्वप्ने **जागरान्ते** जागरे । अथवा स्वप्नान्ते जागरे जागरान्ते स्वप्ने ॥ ( १७ ) **कश्मलेन** मोहेन ॥ [ Fol. 90a ] ( १९ ) **अनित्यं** क्षणिकम् । **चलाचलं** क्षेपावस्थायां चलम् एकाग्रावस्थायाम् अचलम् । **अष्ठीला** अस्थि तदपि सतूलं चलं निस्तूलमचलम् ॥ (२०) **एषा** युद्धपराङ्मुखी । **अप्लवान्** उडूपहीनान् ॥ ( २१ ) **सर्पणं** गमनम् । **असमम्** आत्मासदृशम् ॥

भगवद्याने ॥

## ७४

( १ ) **समाधावन्** वेगवान् । त्वरितं **बभाषे** इत्यर्थः ॥ ( २ ) **प्रणीतभावं** दृढाभिप्रायम् ॥ ( ३ ) **समर्छसि** क्षिपसि ॥ ( ६ ) **अतिवादः** अतिक्रम्यैं वादः । **अपविद्धः** क्षिप्तः ॥ ( ७ ) **आसन्** स्थिताः । **प्रतिष्ठे** [ आधारौ ][3] ॥ ( १० ) **अभिपन्नं** ग्रस्तम् ॥ ( १३ ) **उद्यतः** उद्गच्छतः । **विगाढे** तीव्रे । **संबाधे** संकटे । **वेत्स्यते**[12] ज्ञास्यते ॥ (१४) **नेनेक्षि**[13] क्षालयसि । **परुषैः कर्कशैः** ॥ ( १६ ) **विक[र्षन्तं]**[14] आकर्षन्तम् ॥

1 Lacuna in Ms. 2 Arj reads बान्धवान् सपिण्डान् for the lacuna. 3 So Arj. for lacuna. 4 Ms. एकस्वामिभावः । 5 Ed. रुशतीं । 6 Ed. आरुज्य । 7 So Arj for the lacuna in Ms. 8 Ed. परिभुजन् । 9 Ms. क्षीयसे; Ed. क्षियसि । 10 Ed. आस्से । 11 Ed. शुक्रं । 12 Ed. वेत्स्यसे । 13 Ed. अत्यवाक्षीः । 14 Lacuna in Ms.

७५

( १ ) **भावम्** अभिप्रायम् । **सौहृदात्**[1] स्नेहात् । **आक्षेपात्** वाक्कृततिरस्कारात् । **विवक्षया** किमपि वक्तुकाम्यया । **पर्यायो** य[स्मिन् जन्मनि ][2] [ Fol. 90b ] कृतं तज्जन्म वर्जयित्वा[3] जन्मान्तरकृतम् । अर्थहेतुनास्मिन्नेव जन्मनि कृतमिति ये **न अध्यवस्यन्ति** न निश्चिन्वन्ति । **दैवं** प्राक्तनं [ **मानु**]**षम्**[4] ऐहिकम् ॥ ( ६ ) **स एव** पर्याय एव । **विनाशो** विनाशहेतुः । **पौरुषम्** ऐहिकं कर्म **संदिग्धम्** उपचितमेव परं न फलहेतुः । अथवा **पौ-**[**रुषं**... ]र्थः पुंव्यापारो देवकृतानुकारित्वात् **संदिग्धं** केन कृतमिति संदेहास्पदम् ॥ ( ७ ) **परिदृष्टानि** निश्चितानि । **अन्यथा** परिदृष्टात्प्रकारान्तरे[ण । श्रे]योहेतुत्वेन[4] परिदृष्टादश्रेयो जायत इति यावत् । तत्र परिदृष्टं न कारणं प्रमाणविरोधात्, किन्तु प्राक्तनमेव श्रेयःसाधनं कर्म कारणमित्युन्नीयते । **दोष** इत्युपलक्षणम्, गुणदोषदर्शिभिरिति यावत् ॥ ( ८ ) **सुमन्त्रितं** सुष्ठु विमृष्टम् । **सुनीतं** सुष्ठु कृतम् । **न्यायतः** प्रमाणात् । [ Fol. 91a ] **उपपादितम्** इति इदं भविष्यतीत्यवधारितम् । **कृतं** संपूर्णम् । **दैवेन** प्राक्तनकर्मणा **विरुध्यते** तद्विरुद्धफल-जननात् ॥ ( ९ ) **अकृतं** दुर्बलम् । व्यञ्जकानां देशकालादीनां दुर्बलत्वाद् दैवस्य पौरुषेण विरोधः । तत्फलविरोधाज्जायत इति फलविरोधमाह—**शीतमुष्णम्** इति । शीतादयो **विहन्यन्ते** इत्यन्वयः । तथा हि दैवकर्मकृतं[5] शीतोष्णादि पुरुषव्यापारकृतेन प्रासादादिना बाध्यमानं दृश्यते, तेन फलबाधेन दैवमेव बाधितमित्यनुमीयते ॥ ( १० ) एतमेव विवृणोति—**यदन्यद्** इति । **दिष्टं** प्राक्तनं कर्म तदेव भवत्यस्मादिति **भावः** कारणं[6] यस्य । दैवकृतशीतोष्णादिफलभुज इत्यर्थ । **यत् स्वयंकृतं** प्रासादादि **अन्यद्** दिष्टकृतं शीतोष्णादिफलविरोधि [ Fol. 91b ] **तस्माद्** दैवात् कदाचित्प्राप्तबलाद् **अनवरोधः** अनवधानं[7] तस्यैव स्वयंकृतस्य प्रसादादेः । **तत्र** पौरुषेण दैवबाधे **लक्षण** प्रमाणात् ॥ ( ११ ) **लोकस्य** स्थावरजङ्गमस्य । **नान्यतो** न दैवादि-तरस्मात् । **वृत्तिः** प्रवृत्तिः । हे **पाण्डव** । **अन्यत्र**[8] **कर्मण** इत्यत्रापि नञ् योजनीयः । **क**[**र्मणोऽ**]**न्यत्र**[4] अन्यस्मिन्निमित्तेऽपि न प्रवृत्तिरित्यर्थः ॥ ( १२ ) **एवं** दैवात्पौरुषाच्च प्रवृत्तिरिति **बुद्धिः** यस्य स **प्रवर्तेत**[9] आरम्भं कुर्यात् । तत्र हेतुः—**फलम्** इति । **उभयोः** दैवपौरुषयोः **अन्वयात्** संबन्धात् । क्वापि दैवं प्रधानं पौरुषं गुणभूतम् । क्वापि पौरुषं प्रधानं दैवं गुणभूतम् । यथा, दैवकृतशीतोष्णादि[ Fol. 92a ]फलबाधकं प्रसादादिनिर्माणलक्षणं पौरुषं प्रधानं गुणभूतं तु दैवम् । अन्यथा प्रसादादिनिर्माणस्यैव असति दैवे विपरीते चासंभवात् । अन्ततो भूच्छिद्रादेरपि विघ्नस्य संभाव्यमानत्वात् । क्वचिदुभयमपि प्रधानम् । यथा, अचिन्तिताभिप्रेतफलसिद्ध्यनुमितानु[ कूलस्य ][4] दैवस्य पुरुषस्य पौरुषशैथिल्ये सति प्रतिपक्षेण परि-भूयमानस्य प्रचण्डपौरुषातिशयात् परै राष्ट्रग्रहणम् । न चात्रापि पौरुषशैथिल्यकाले दैववैगुण्य-माशङ्कनीयम् । पुरुषशैथिल्याद् दृष्टादेव परिभवसिद्धौ अदृष्टस्य दैववैगुण्यस्य कल्पनायां प्रमाणा-

1 Ed. प्रणयात् । 2 So Arj for lacuna. 3 Ms. परिवर्जयित्वा आयो corrupt ). 4 Lacuna in Ms. 5 Ms. सर्वकर्म कृतं । 6 Ms. करणं । 7 Should be अनवबाधनं ? 8 Ms. अन्यत् । 9 Ed. प्रवर्तेते; Ms. प्रवृत्तेत ( corrupt ), but the Pratika of this word is given below as प्रवर्तेते !

भावात् । इति दैवपौरुषयोस्त्रिधान्वयः ॥ **स कर्मसु प्रवर्तते** इत्यन्वयः । **तस्य** कर्मणः ॥ ( १३ ) **अर्थमात्रा** अर्थगुणाः ॥ ( १४ ) **अतिप्र[ णीतर ]**[1] [ Fol. 92b ]**श्मिः** तीव्रः । **तथा भवति** तथा सति । **पर्यये** वैपरीत्ये ॥ ( १८ ) **धूः** भारः ॥ ( १९ ) **युद्धं न हि न कामये** इति धनंजयस्य कामः ॥

भगवद्याने ॥

## ७६

( १ ) **प्रतिभाति** रोचते ॥ ( ३ ) **कर्माणि** प्राक्तनानीति शेषः ॥ ( ४ ) **तदिदं** व्याहृतं त्वया । **तथा च** पौरुषस्य बलवत्त्वे । दैवस्य बलवत्त्वे **तथा न**[2] **च** । एत[दुभयं ][1] **युक्तं**[3] तत्प्रशमनलक्षणम् । **एवं न** तथा **च** इत्यस्मिन् पक्षे ॥ ( ५ ) **अस्मत्तः**[4] अस्मत्सकाशात् । **पापं** त्वद्वचनाकरणलक्षणम् । **तेषाम्** एव मते **कर्माणि** प्राक्तनानि कर्तॄणि **कुर्वन्ति । फलोदयः** पुरुषकारः ॥ ( ६ ) **संपाद्यमानं** फलेन योज्यमानं **कर्म** प्राक्तनम् । **परैः शर्म** सुखं **भवेत्** ॥ ( १२ ) **उपमर्षिता** सोढा ॥ ( १६ ) **निर्गतो** निश्चयेन प्राप्तः ॥

## ७७

( १ ) **द्वयोः** हिताहितयोः ॥ ( २ ) **शुद्धं** न दूषितं मूषकादिना ॥ ( ४ ) **लोककारणानि**[5] पञ्चभूतानि ॥ ( ५ ) **दैवं कर्म**[6] अविद्यमानं[6] [ Fol. 93a ] **कर्तुं न शक्यम्** ॥ ( ८ ) **सानुबन्धः** सपरिवारः ॥ ( १० ) **न न**[7] **वाच्य** वाच्य एव ॥ ( १६ ) **आत्मानम्** आशयम् ॥ ( १७ ) **परमं दिव्यम्** ईश्वरसंजिगीषा ( ? )। **विधानं** विधिस्तेन **विहितं** कृतम् ॥ ( १८ ) **न त्वाशंसे** न पुनरिच्छामि ॥ ( २० ) **संकल्पिता** वध्यत्वेन ॥ ( २१ ) **विभाव्यं** विचारणीयम् ॥

## ७८

( १८ ) **विवर्तन्तं** विरुद्धेन मार्गेण गच्छन्तम् ॥

## ८०

( २ ) **असिता** अबद्धाः ॥ ( ११ ) **प्रतिसमासितुं** बाधितुम् ॥ ( १५ ) **समर्थ** युक्तम् ॥ ( १७ ) **प्रसृतं** पक्वं तस्य **अग्रभुक** ॥ ( १८ ) **अवध्ये** बालादौ ॥ ( २३ ) **अभिमन्युर्यथा तव** भागिनेयः **तथा ते** अपि ॥ ( २६ ) **निरामर्षेषु** निष्कोपेषु ॥ ( ३२ ) **विनीयतां** विशिष्टः क्रियतां वधेनापनीयतां वा ॥ ( ३३ ) **मृदुसंहारं** मृदुग्रथनम् । **वृजिनाग्रं** कुटिलाग्रम् । **सुदर्शनं न......**[8] ॥ ( ३४ ) **महाभुजगवर्चसं** शत्रूणां भयंकरत्वात् । **पक्षं** कलापम् ॥ ( ४३ ) **द्रवीभूतं** हृदयमिव ॥ ( ४७ ) **अदनीकृता** भक्षीकृताः ॥

---

1 Lacuna in Ms. 2 Dropped in Ms. 3 Ms. युद्धं । 4 Ed. अस्माकं । 5 Ed. लोककारणं । 6 Added on the margin. 7 Ed. स; Ms. च । 8 Arj. reads for the lacuna : नयनप्रीतिकरं ।

८१

( ४ ) **दिष्टस्य** दैवस्य ॥ ( ६ ) **मैत्रे** [ मैत्रदैव] [ Fol. 93b ] ते[1] ॥ ( ७ ) **कौमुदे** कार्त्तिके । **स्फीतैः** समृद्धैः **सस्यैः** अन्नैः **सुखे** सुखावहे । **कल्पो**[2] नीरोगो दक्षो वा ॥ ( ८ ) **प्रतीतानाम्** आप्तानाम् ॥ ( १० ) **आलभ्य** स्पृष्ट्वा ॥ ( १२ ) **उपासङ्गाः** [ तूणाः ][1] ॥ ( १४ ) [**प्र**]**सस्रुः**[1] प्रसृतवन्तः ॥ ( १५ ) **आकाशगं** सूर्यम् । **अध्वगं** भूस्थम् ॥ ( १६ ) अर्धचन्द्रादयस्तत्रोत्कीर्णा इत्यर्थः ॥ ( १८ ) **सूपस्करं** सपरिकरम् । **वैयाघ्रं** व्याघ्रचर्मकृतं वेष्टनम् ॥ ( १९ ) [ **संपा**]**दयामासुः**[3] योजितवन्तः ॥ ( ३२ ) **संसाधनार्थं** संसिध्यर्थम् ॥ ( ३९ ) **त्रायते स्म**[4] रक्षितवती । **आहरद्**[5] आहृतवान् ॥ ( ४२ ) **ऊढाद्** विवाहात् । **निकारान्** भर्त्स[नानि ॥ ][1] ॥ ( ४५ ) [**आ**]**नर्तैः**[1] जनपदैः **सत्कृतः** पूजितः ॥ ( ५२ ) **अस-ङ्गेन** कामेन ॥ ( ५९ ) **आचेमुः** पीतवन्तः ॥ ( ६३ ) **क्व संसिद्धाः** क्व चलिताः । **वीथी** मार्गः ॥ ( ६५ ) **सुचरिते** तपसि ॥ ( ६७ ) [ **देवासु**]**रं**[1] देवासुरसमाहारः । **पुराणस्य** चिर-न्तनस्य । पूर्वं भीष्मविदुरादयो देवाः, असुरा दुर्योदनादयः ॥

८२

( १ ) परवीरान् आरुजन्तः ॥ ( २ ) **सादिनः** अ[ Fol. 94a ]श्वारोहाः ॥ ( ५ ) **अन्वक्**[6] पश्चाद्गामी । **विघने** विगतमेघे नभसि ॥ ( ६ ) **प्रत्यगूहुः** पश्चिमाभिमुख्यः अवहन् ॥ ( ७ ) **प्रासिश्वन्** उद्गीरन् ॥ ( ८ ) **आदिशो** विदिशः ॥ ( १० ) **दक्षिणपश्चिमो** नैर्ऋतः ॥ ( १६ ) **अह्ना**[7] दिवसेन ॥ ( १८ ) **उपप्लव्याद्** विराटनगरात् ॥ ( २२ ) **वर्मण्यं**[8] कवचादि ॥

८३

( ६ ) **यात्रा** प्रवृत्तिः । **वृत्तिः**[9] आचारः । **वीर्यं** वीरभावः । **प्रज्ञा** [ तत्त्व-][1]साक्षा-त्कारः । **शौचं**[10] संकरवर्जनम् ॥ ( ८ ) **अभिप्रायान्** मनोरथान् ॥

८४

( २ ) **आहुकानां** यादवविशेषाणाम् ॥ ( ७ ) **नित्यप्रभिन्नान्** सदामदान् । **ईषादन्तान्** स्थूलदीर्घदन्तान् । **अष्टौ अनुचर्यः** करिण्यो यस्य ॥ ( ८ ) **अप्रजातानाम्** अप्रसूतानाम् ॥ ( १४ ) **मृष्टैः** शुद्धैः ॥ ( १६ ) **अनावृता** अनवरुद्धाः ॥

८५

( ८ ) अत्र तु [ मायाच्छद्म]पर्यायैः[1] वञ्चनातिशयमाह—**मायैव** इत्यादि ॥ ( १० )

1 So Arj. for lacuna in Ms. 2 Ed. कल्यः । 3 Ed. संपादयांचक्रुः । 4 Ed. reads differently. 5 Ed. उत्तरत् । 6 Ms. प्रत्यक् ( wrongly ). 7 This Pratika is not found in Ed. 8 Ed. वर्माणि । 9 Ed. धृतिः । 10 Ed. ओजः ।

**बिभित्ससि** भेत्तुमिच्छसि ॥ ( ११ ) **धनंजयादन्यः कर्तुं न शक्यः** ॥ ( १२ ) **भक्तिः** भजनम् । ( १३ ) **कुम्भात्** [ मङ्गलधिया ][1] [ Fol. 94b ] कल्पितात् । **नैशिष्यति**[2] न स्वाम्येन विषयीकरिष्यति ॥ ( १५ ) **उपाकुरु** निवेदय ॥

## ८६

( १ ) **असंहार्यः** अभेद्यः॥ ( २ ) **कारणं**[3] भेदाभिप्रायः ॥ ( ३ ) **देशका[ल]**..... यथा न दीयतेऽस्माभिः । **भयाद्** आशङ्काजनकत्वात् । **कृष्णेन** न गृह्यते पाण्डवचेतासि भेदाशङ्काजनकत्वात् । **न हि नार्हति** अर्हत्येव ॥ ( ४ ) [ कृष्णे]नागृहीते[1] धनेऽस्माकम् **अवमानः** स्यादिति भावः ॥ ( ८ ) **अन्यम्** अवमन्तारमवमन्तुम् **अलं** समर्थो न भवति माहात्म्यादेव ॥ ( ९ ) **मनसा कार्यतां गतं** कार्यतयावधारितम् ॥ ( १० ) **तीर्थेन** गुरुणा । **संशाम्य** क्रोधादुपरम ॥ ( १२ ) **निष्केवलाम्** असाधारणां निश्चितां चिरकालभोगेन । **सहोपाश्नीयां** सह भुञ्जीयाम् । **जीवन्**[4] उपाश्नीयाम् उपास्य वा जीवेयम्[5] इति **पर्यायः** क्रमो नास्ति ॥ ( १३ ) **समर्थितं** निश्चयं नीतम् ॥ ( १९ ) **परीतो** विपरीतः ॥

भगवद्याने ॥

## ८७

( ८ ) **[ न संभवन्ति ]**[5] [ Fol. 95a ] न सन्ति[6] ॥ ( १६ ) **समेयाय**[7] संगतः ॥ ( २० ) **सांबन्धकं**[8] संबन्धोचितम् ॥ ( २१ ) **अर्चितो** वाग्भिः । **पूजितो** मधुपर्कादिना ॥ ( २६ ) **धर्मसततो**[9] धर्मनित्यः ॥

## ८८

( २० ) **वष्टि**[10] कामयते । **[संग]रः**[11] प्रतिज्ञा ॥ ( २२ ) **कथं** किं प्रकारेणास्ते इत्यनागतेन संबन्धः ॥ ( २४ ) **सज्ञातेः** सकुटुम्बस्य ॥ ( २५ ) **मरुत्पतिः**[12] वायुः ॥ ( २७ ) **भीमं** भयानकम् । [ **प्रदर्शनेन** प्रत्य]क्षेण[13] ॥ ( २८ ) **अर्जुनेन** कार्तवीर्येण ॥ ( ३१ ) **अधिराज्यं**[14] राज्ञामुपरि राज्यम् ॥ ( ३७ ) **अपचायी** पूजकः ॥ ( ४१ ) **पक्ष्माणां सङ्घातो**[15] मेलकः स जायते यावति काले, निमेष इति यावत् ॥ ( ४३ ) **अन्वरुध्यत**[16] अकामयत ॥ ( ४८ ) **कृष्णायाः** कृष्णामपेक्ष्य ॥ ( ४९ ) **निवातस्थाम्** अपवरकप्रविष्टाम् ॥ ( ५३ ) **अलंकारः** [ शोभातिशयहेतु]त्वात्[13] ॥ ( ६१ ) **पितरं** शूरम् । **अर्पिता** पणीकृता ॥

---

1 So Arj. for the lacuna. 2 Ed. नैषिष्यति । 3 Ed. सत्कार- । 4 Ms. जीवं । 5 Ms. जीवे । 6 Ms. शान्ति । 7 Ed. समीयाय । 8 Ed. संबन्धकं । 9 Ed. reads differently. 10 Ed. धत्ते । 11 Lacuna in Ms. 12 Ed. वायुवेग° । 13 So Arj. for the lacuna. 14 Ed. आधिराज्यं । 15 Ed. संपातः । 16 Ed अन्वपद्यत ।

( ६२ ) **तुभ्यं** तव ॥ ( ६३ ) **निकृता** वञ्चिता ॥ ( ६४ ) **सूतके** अर्जुनजन्मनि ॥ ( ६५ ) **त्रीन्मेधान्** अश्व[मेधादीन् ॥ ( ६६ ) **वेधसे** धर्मविशे]¹ [ Fol. 95b ] षणम् । **कृष्णाय** तुभ्यम् । **महते** व्यापकाय, कृष्णस्य विशेषणम् ॥ ( ६७ ) **त्वं चेद्** असीत्यन्वयः ॥ ( ६८ ) **भवो** भवनम् ॥ ( ७३ ) **अप्रतिष्ठा** मरणम् ॥ ( ७४ ) **नि[त्योद्युक्तो** नित्योद्यतः ]¹ ॥ ( ७५ ) **अतिक्रमिष्यति** अकृतकार्यो यास्यति ॥ ( ७६ ) **स्वनृशंसम्** आत्महिंसाम् ॥ (८२) **अभ्यगच्छद्** विताडयन्ननुगमं कृतवान् ॥ ( ८५ ) **बृहती** महिम्ना ॥ ( ९५ ) [ **अन्तं** चतुवर्ग]स्यान्तं¹ धर्ममोक्षौ । **धीरा** धिया रममाणाः । **मध्यम्** अर्थकामौ । **ग्राम्याणां** मूढानां **सुखं प्रियं** येषाम् । **उत्तमान्** पुष्टान् । **परिक्लेशान्** [ दुःखा]नि¹ । अतिशयितान् **भोगान्** सुखानुभवान् ॥ ( ९६ ) उक्तमर्थमितिहासेन द्रढयति—**अन्तप्राप्तिम्** इत्यादिना । कृतव्याख्यानमिदम् । अथवा **अन्तो** दृढताविवेकिते, मध्यम् उभयात्मता ॥ ( ९९ ) **अबुद्धिजं तमः** संदेहाज्ञाने ॥ ( १०२ ) **व्यवस्थायां** भूमिधनादिविभागे । **मित्रेषु** इत्युपलक्षणम्, अमित्रेष्वपि बोधव्यम् । **बुद्धि**[ Fol. 96a ]**विक्रमे** युद्धसाधनाधिष्ठाने यथोक्ते कार्ये मध्यस्थता कृष्णस्य धर्माद्युपचारैः प्रकटयति ॥

## ८९

( ३ ) **अभ्रं घनम्** इति पुनरुक्ताभासवदलंकारे [ घनीभू]तमभ्रमित्यर्थः¹ ॥ ( १२ ) **शठस्य उदर्कं** उत्तरफलं यस्मिन् ॥ ( १४ ) **साह्यं** साहाय्यम् ॥ ( १६ ) **ओघो** जलप्रवाहः । **प्रगृह्य** उत्क्षिप्य ॥ ( १७ ) **अनम्बूकृतं** निष्ठीवनरहितं दण्डयोजनरहितं वा । **अग्रस्तम्** अलुप्तपदम् । **अनिरस्तम्** अत्वरितम् । **असंकुलं** प्रसन्नम् । **हेतुमत्** सयुक्तिकम् । **उत्तमं** फलवत् ॥ ( २२ ) **वैरं** विरोधः । **विग्रहो** युद्धम् ॥ ( २४ ) **कामाद्** इच्छातः । **संरम्भात्** कोपात् । **द्वेषो** विरागः, अनुबन्धी कोप एव वा । **अर्थकारणाद्** द्रव्यहेतोः । **हेतुवादः** अहेतौ हेतुतया वदनम् । अर्थस्य विनियोक्तुमिच्छा **लोभः** ॥ ( २५ ) **संप्रीतिः** उभयोः प्रीतिः ( २६ ) प्रियांश्चानुवर्तिनः² ॥ ( २८ ) **अनु** अनुगतः ॥ ( २९ ) **विरुरुत्सति** विरोद्धुमिच्छति ॥ ( ३४ ) **निवेशाय** विश्रा[माय ॥ ( ३७ ) **अप]चितिः**¹ पूजा ॥ ( ३९ ) **शुचीनि** संकररहितानि ॥

## ९०

( २ ) अर्थधर्मयोर्विहितमार्गमतिक्रम्य गच्छतीति । **मानघ्नो** मान्येषु पूजाविमुखः ॥ ( ३ ) **दुरा[त्मा** दुष्टहृदयः । **प्र**] [ Fol. 96b ]**ग्रहं**³ प्रौढग्रहम् । **अनेयः** अविधेयः । **श्रेयसाम्** उत्तमानाम् ॥ ( ४ ) **अकर्ता** अनुपकारकः ॥ ( ४१४* ) **निःश्रमः** फलपर्यन्तावसायी श्रमः ॥ ( ६ ) [ **अविचक्षणः** ]¹ अविवेचकः ॥ ( ९ ) **निश्चितं** कर्तृ ॥ ( १० ) **संवित्** परस्परानुमतिः । ( १६ ) **प्रतीपं** प्रतिकूलम् ॥ ( १९ ) **इदं** बलं **शक्यं** जेतुमिति शेषः ॥ (२०) **एवम्** उक्तैर्दोषैः **उपपन्ने[षु** संबद्धेषु ]³ ॥ ( २१ ) **वीतमन्युः** गतशोकः ॥ ( २२ ) **क्षेमः**⁴

1 Lacuna in Ms. 2 Ms. प्रियायांश्चानुवर्तिश्च (corrupt). 3 So Arj. for the lacuna. 4 Ed. शमः ।

कुशलम् । **केवलो** मायारहितः । **बद्धम्** अञ्चले ( ? )[1] । **सन्तं** कतिपयदिवसस्थायिनम् । लब्धं **मन्यते** परैराच्छेद न प[श्यति ॥ ( २३ ) **पर्य**]स्ता प्रेरिता । **पृथिवी** पृथ्वीनिवासिनः । **राजानः** क्षत्रियाः । **क्षितिपा** अभिषिक्ताः ॥ ( २४ ) **सारं** सुवर्णादि । **सुसंहिताः**[2] सुष्ठुकृत-संधानाः ॥ ( २५ ) **त्यक्तात्मानः** त्यक्तदेहाः । **सृष्टा** विधिनेति शेषः ॥ ( २८ ) **भूयः** प्रचुरतमं यथा भवति । **त्वयि प्रेम्णा** स्नेहेन । **बहुमानो** महद्बुद्धिः । **सौहृदात्** मैत्र्यात् ॥

## ९१

( २ ) पितेव मातेव[3] ॥ ( ६ ) **यतन्** आरभमाणः । **प्राप्तो भवति तत्पुण्यं**

धर्माय पुनरारम्भः संकल्पोऽपि न निष्फलः ।

इति वचनात् ॥ ( ७ ) अनभिरुचिः पापचिन्ता[विरोधी संकल्पः ][4] । ( Fol. 97a ) एतेन मानसं पापं मानसेनैवं प्रायश्चित्तेन हतम् । यत्र तु पापचिन्तायां तद्विरोधी संकल्पो न हतस्तत्र मानसं पापमस्तीति धर्मविदां मतम् ॥ ( ९ ) **तदन्वयाः** तदनुगामिनः ॥ ( १० ) **नाभिपद्यते** नोपसर्पति ॥ ( ११ ) **कस्यचिद्वाच्यो न भवति** इत्यर्थः ॥ ( १४ ) **प्रीतिर्भविष्यति** ऋणं न भविष्यतीत्यन्वयः ॥ ( २० ) **काव्यां** वर्णनीयाम् ॥

## ९२

( १ ) **शिवा** निरुपद्रवत्वात् । **नक्षत्रसंपन्ना** कृष्ण[पक्ष]त्वात् ॥ ( ११ ) **निसृष्ट-वन्तं**[5] दत्तवन्तम् ॥ ( ४२१* ) **किङ्किणीकिना** क्षुद्रघण्टिकावता ॥ ( १३ ) **आमुच्य-** निबध्य ॥... (१८) [ **प**]**रिष्कारो** मण्डनम् । (१९) **संमृष्टं** संमार्जन्या । **संसिक्तं** जलेन ॥ ( २० ) **एकपुष्करा** एकमुखाः ॥ ( २३ ) **परंशताः**[6] असंख्याः ॥ ( ४४ ) **आसनानि** इति आनीयन्तामि[ति क्रिया]न्तरेणापि[7] **गमकम्** ॥

## ९३

( ६ ) **कृपा** परदुःखप्रहाणेच्छा । **अनुकम्पा** परदुःखप्रहाणम् । **कारुण्यं** स्वयमुद्भूत-दुःखस्योत्तरोत्तर[ दुःखासंपादन] [ Fol. 97b ] म्[7] । **आनृशंस्यम्** अहिंसा ॥ ( ७ ) **असां प्रतम्** अयुक्तम् ॥ ( ८ ) **वारयतां**[8] निषेधताम् ॥ ( ११ ) **आपत्** कर्त्री ॥ ( १६ ) **निष्कलं** निर्मायम् । **सहभूता** मिलिताः ॥ ( १८ ) **प्रसहेत** शक्नुयात् ॥ ( २७ ) [ **संधित्स**]**ते**[9] संधातुमिच्छति ॥ ( ३४ ) **अभिजातिः** कुलम् ॥ ( ३५ ) **शिवेन** कुशलेन ॥ ( ३७ ) **हार्दं** स्नेहः **आसीद्** बालेषु **आयुषः क्षये युद्धे प्राप्तेऽद्य भवतु** इत्यन्वयः ॥ ( ४२ ) [ **नाहा**]**स्म**[10] न त्यक्तवन्तः ॥ ( ५१ ) **दानाद्** राज्यसमर्पणात् ॥ ( ५५ ) **दाहितो** जतुगृहे **निरस्तो** निःसारितः ॥ ( ५७ ) **उपधिः** छद्मः ॥ ( ५९ ) **मा नीनशः** मा नाशय ॥

---

1 Arj. reads. वञ्चनेन । 2 Ed. सुसंहता । 3 Explaining पितृमातृवत् ।
4 So Arj. for the lacuua. 5 Ed. विसृष्टवन्तं । 6 Ed परःशताः ।
7 So Arj. for the lacuna. 8 Ed. वारयिता । 9 Ed. संपत्स्यते ।
10 Lacuna in Ms.

## ९४

दम्भोद्भव[1] इत्या...[आ]ख्यानस्य दर्पस्य विनाशहेतुत्वच्छलेन नरनामधेयस्यार्जुनस्य माहात्म्यं तात्पर्यार्थः ॥

( ९ ) **वैद्या** वेदा[2]ध्येतारः ॥ ( १२ ) **अनेकानि जननानि** [ जन्मा]नि यस्मिन् ॥ ( १५ ) **अनिर्देश्यं** वक्तुमशक्यम् ॥ ( १८ ) **धमनिसंततौ** शिराव्याप्तौ । **उपसंगृह्य** चरणाविति शेषः ॥ **अत्यगृह्यत**[3] अतिग्रहेण प्राप्तः ॥......[ Fol. 98 missing ].

## ९७

[ Fol. 99a ] ( १७ ) [ **निसर्गात्** ][3] सृष्टेः ॥ ( १८ ) **जातिः** जन्म । **विसर्ग**[4] क्षयम् । [ **कथ्यमान**]**म्**[5] अपि **न शृणोमि** कुत एव दर्शनम् ॥

## ९८

( १४ ) **आक्रीडः** क्रीडास्थानम् ॥ ( १९ ) **दित्सात्मकं** दानेच्छाप्रचुरम् । **अलम्** [ अत्यर्थम् ][6] ॥

## ९९

( ६ ) [ **नि**]**र्घृणा** निष्कृपा ॥

## १००

( २ ) **पृथिवीसाराः** षड्रसाः ( ५ ) **पुष्पितस्य** पुष्पस्य **पर्यन्तमनु** लक्षीकृत्य **वेष्टितं** वेष्टनम् । **बिभ्रतः**[7] पुष्णन्तः ॥ ( १० ) **ऐडवि**[**लः** कुवेरस्तेन ][8] जातसंज्ञा ॥ ( १३ ) **सुधाहारा** नागाः । **स्वधाभोजिनः** पितरः । **अमृताशेषु** देवेषु ॥ ( १५ ) **परिचारः**[9] भोगः ॥

## १०१

( ३ ) **श्वेतोच्चयः** कैलासः ॥ ( ७ ) **पताकाया आभोगो** वि[स्तारस्तद्व]**द्**[10] **भोगः** शरीरं येषाम् ॥ ( २१ ) **प्रणिधानेन** सावधानतया ॥ ( २४ ) **पञ्चत्वं** मरणम् ॥

## १०२

( १ ) **कोशदण्डजं बलम्,** शत्रुभिर्विज्ञातं **तेजः,** अमोघफला शक्तिः **वीर्यम्** । **बलं**

---

1 Ms. दम्भो । 2 Ms. विद्या । 3 This appears to be the Pratika from Arj. 4 Ed. निसर्ग । 5 Lacuna in Ms. 6 So Arj. for the lacuna. 7 Ed. पिबन्तः । 8 So Arj. for the lacuna. 9 Ed. परिवासः । 10 Lacuna in Ms. Ed. पर्वताभोग० ।

[बहुसे]नामन्त्रादिभवम् ॥ (९) **प्रतिरूपस्य** तत्सदृशस्य ॥ (१३) **संयुक्तः** उचितः ॥ (१४) **कारणस्य** विवाहकारणस्यायुषः । **देहकरः** पिता ॥ (१९) **आयुषः शेषेण** मरणान्तर[भाविना कार्ये]ण मयापकरणीयेन । **ज्ञास्यामि**[1] गरुडस्य शक्तिश्लाघामिति शेषः । अथवा यत्नेन क्रियमाणं किं भविष्यतीति **ज्ञा[स्यामि** ]... ॥

## १०३

(३) [Fol. 99b] **प्रतिनये**[2] प्रतीकारे । **कामकारवशं**[3] स्वातन्त्र्यम् ॥ (५) **प्रसवः** संतानः ॥ (१८) .भविष्यत्[फल]दारुणः[4] । **रथचक्रं** सुदर्शनः ॥ (२१) **विकत्थ-[नं**[5]...... ] तत्प्राणान् ॥ (२५) **प्रचेता**[6] नष्टचित्तः । **विह्वलो** निष्पन्दः । **पत्राणि** पक्षान् ॥ (२७) **लोकसारस्य** लोकश्रेष्ठस्य । न वेति शेषः (?)[7] ॥ (२८) **बलदाहेन** दर्पज्वरेण **विद[ग्धस्य** भ]स्मीकृतस्य ॥ (३०) **मैवं सदर्पो भूयाः**[8] ॥ (३४) **तीर्थेन** उपायेन ॥

## १०४

अस्य मातलिवरान्वेषणोपाख्यानस्य नारायणमहिमा तात्पर्यार्थः ॥ मातलि......... ॥

(२) **ज्ञातयः** सगोत्राः । **बन्धवो** मातुलाद्याः ॥ (३) **भगवान् वा पितामहो** व्यासः ॥ (७) अस्य गालवोपाख्यानस्य निष्फलनिर्बन्धतो[ऽनर्थप्राप्तिरिति तात्पर्यार्थः][9] ॥ (८) **वसिष्ठो भूत्वा स्वयमगच्छद्** इत्यन्वयः ॥ (९) **अन्यतमम्** एकम् ॥ (१०) **संभ्रान्तः** सत्वरः । **श्रपयामास** पाचयामास । **न प्रत्यपालयत्**........ [10] ॥ (१३) [**भक्तं मूर्ध्ना बाहुभ्यां** ][11] **च प्रगृह्य** इत्यन्वयः । **मारुताशनो** वायुभक्षः ॥ (१९) **शुश्रूषया** श्रवणेच्छया । **भक्त्या** सेवया ॥ (२२) **विमृष्टानां**[12] विशुद्धानाम् । **अपवर्गेण** दा[नेन] " .

[Fol. 100 to 109 missing ; Fol. 111 also missing ; for Fol. 110 see below ][13] ॥

## ११२

[Fol. 112a] (२) [त]स्माद् **धनम्** ॥ (३) **प्रोष्ठपदाभ्यां** निधिरक्षकाभ्याम् कृतम्[14] । **शुक्रे तिष्ठति**[15] इत्यन्वयः । **चिन्ता**[16] मनोरथः ॥ (५) **नौ** आवाम् ॥ (६) **अन्ववाये** वंशे ॥ (९) **प्रतिष्ठाने** पुरे ॥ (१०) **सत्कारं** पू[जाम्...] ॥ (२०) तथा उपमा यस्य **तथोपमम्** ॥

---

1 Ed. प्रज्ञास्यामि । 2 Ed. प्रतिभये । 3 Ed. कामकारवरं । 4 Explains उदर्केदारुणं । 5 Ed. विकत्थितं । 6 Ed. विचेता । 7 Arj. reads नारायणस्येति शेषः । 8 Ed. भूयः । 9 So Arj. for the lacuna. 10 Arj. reads : न विलम्बितवान् for the lacuna. 11 Lacuna continues in Ms. 12 Ed. हि सृष्टानां । 13 The folios which follow appear to be displaced and wrongly numbered. They are placed by us here, consecutively according to the sequence of Adhyāyas of the text. 14 Ms. हृतं (corrupt). 15 तिष्ठति in verse 2. 16 Ed. चित्त° ।

## ११३

( २ ) वत्सानां काश्याश्च ईशः ॥ ( ९ ) **आशानाशनात्**[1] प्रार्थनाभङ्गात् । **नास्तीति** प्रत्यावृत्य **देहि** इति **वा यद् वचः नातः प**[**पिष्ठत**]**रं** **विद्यते**[2] इत्यन्वयः ॥ ( १० ) **संभावितम्**[3] आशाविषयीकृतम् । **अर्थिताम्**[4] अर्थवत्ताम् ॥ ( ११ ) **अपचायिनी**[5] पूजिका ॥ ( १६ ) **उपलब्धं** ज्ञातम् ॥ ( १७ ) **राज्ञां** मध्ये **क्षमम्** सम[र्थम् । **शुल्कतः** ][6] शुल्केन ॥ ( १९ ) **प्रजाभिकामम्** अपत्यार्थिनम्[7] । **शाम्यन्तं** वयसा ॥

## ११४

( २ ) **उन्नता षट्सु** स्तननितम्बवक्षःसु । **सूक्ष्मा सप्तसु** करयोश्चरणयोर्नखकेश-[चर्मसु । ग]**भीरा त्रिषु** नाभिहृदयस्वरेषु । **रक्ता पञ्चसु** करयोश्चरणयोरधरे च ॥ ( ३ ) **बहुभिर्देवासुरैरनूकं**[8] सादृश्यं यस्याः ॥ ( ८ ) **यद्विधा** यत्प्रकाराः । ......[एष्टव्या इ]-[ Fol. 112b ]च्छार्हाः । **शतशः** अनन्ताः ॥ ( १३ ) **संहारो** दानम् ॥ ( १७ ) **वसुमत्तरो** घनवत्तरः । **वसुप्रभः**[9] अग्निप्रभः ॥

## ११५

( १२ ) **वैदर्भ्यां** लोपामुद्रायाम् ॥ ( १३ ) **आर्चीको** जमदग्निः ॥ ( १८ ) **निर्यातयामा**[स द]दौ ॥

## ११६

( १२ ) **परैर्गतं मार्गं गमिष्यामि** इत्यन्वयः ॥

## ११७

( १४ ) **एवम्**[10] इति वचोविशेषणम् । **इदं** वक्ष्यमाणम् । **इति** एवंप्रकारम् ॥ ( २० ) **अभिप्रतीतेन** तुष्टेन । गा......ते ॥

## ११८

( ५ ) **उत्क्रम्य** त्यक्त्वा **वनम् एव वृतवती** ॥ (७) **लघुतां** कृशताम्, अथवा उपरिगमनानुकूलां सत्त्वावस्थाम् ॥ ( ८ ) **श्लक्ष्णं**[11] सूक्ष्मम् ॥ ( १० ) **मृगा** मृगया[चर्यायुक्ता ][12] **राजानो** येषु । **सिंहा विप्रोषिता** यस्मात् । **विप्रमुक्तेषु** त्यक्तेषु ॥ (१३) **नाहुषो** ययातिः ॥ ( १४ ) **महीयते** पूज्यते ॥

1 Ed. °नाशनं । 2 Ed. उच्यते । 3 Ed. संभावितः । 4 Ed. अर्थिनां । 5 Ed. उपचायिनी । 6 Lacuna in Ms. 7 Ms. अपत्यार्थी । 8 Ed. बहुदेवासुरालोका । 9 Ed. वसुप्रख्यः । 10 The Pratika is not found in Ed. 11 Ed. शष्प° । 12 So Arj. for the lacuna.

## ११९

( ७ ) **मानेन** अहंकारेण ॥ ( १३ ) **प्रतिबन्धुषु** बन्धुषु व...॥ ( १५ ) [**प्रति**]**मानं** प्रतिबिम्बम् ॥ ( २३ ) **न ते पराः** अन्ये । **पुरातने**[1] पुराणे ॥ ( २८ ) **अष्टभागेन** अष्टमेन ॥

## १२०

( ७ ) **यशः** पुण्यम् ॥ ( ८ ) **वैहार्येषु** क्रीडासु ॥ ( ९ ) **निपातेषु** पराजयेषु ॥ ( १६ ) **समस्ता** मिलिताः ॥

## १२१

[ Fol. 113a ] ( ४ ) गन्धर्वैः **उपगीतः**, अप्सरोभिः **उपनृत्तः** ॥ ( ७ ) **लोक्येन** लोकहितेन ॥ ( ८ ) **तमसा** अज्ञानेन । **अज्ञात्वा पातितोऽसि** । ( १२ ) **आत्थ**[2] ब्रूहि ॥ ( १५ ) **शाठ्येन** परवञ्चनेन । **मायाभिः** मिथ्याज्ञानैः ॥ ( १६ ) **समः** तुल्यः । बृहस्पतेरपि मानेनाधरीकृतत्वात् ॥ ( २२ ) **बहुप्रधारितो**[3] नानाशास्त्रगतः ॥

गालवचरितं समाप्तम् ॥

## १२२

( ३ ) **अङ्ग** हे ॥ ( २० ) अनेकेषु क्षत्रियेषु स्थितं **शास्त्रं** शासनम् । **किंपाकं** महाफलम् ॥ ( २१ ) **निःश्रेयसं** कल्याणम् ॥ ( २६ ) **गौः** भूमिः ॥ ( ४२ ) **दुर्जनाद्** दुर्जनसङ्गात्, सङ्गे सङ्ग्युपचारात् ॥ ( ४९ ) **आधिथाः**[4] आरोपय ॥ (५१) **एकः** श्रेष्ठः । **यस्मिन्**[5] त्वदीययोधे **जिते** तत्र समस्तयोधसहितस्यापि **जितं** भङ्गः **स्यात्** । **स** एव **एकः** [ **पुमा** ]**न्**[6] अङ्कभूतो[7] **दृश्यतां** निरूप्यताम् । **किं जनक्षयेण कृतेन** । अथवा, **यस्मिन्** अर्जुने **जिते जितं** जयस्तव **स्यात् स** एवार्जुनः **एकः** श्रेष्ठः **पुमान्** [ **दृश्य** ]**ताम्**[6] [ Fol. 113b ] अङ्कभूतः[7] । तस्य प्रतियोगिनं निरूपय ॥

## १२३

( ८ ) **कापथं** कुत्सितं पन्थानम् ॥ ( १२ ) **मा स्थाः** मा तिष्ठ । **समं** तुल्यं यथा भवति[8] ॥ ( १३ ) **कृत्याय** कार्याय ॥ ( १४ ) **मा**...[ **घा** ]**तय** ॥ ( २५ ) **संहितः**[9] संधिं प्रापितः । **स्वस्त्ययनं** शान्तिकर्म ॥ ( २६ ) **इदं** संधानम् ॥ ( २७ ) **अपराभवो नास्ति** पराभव एव ॥

## १२४

( ३ ) **वैशसं** विरोधः ॥ ( १० ) **निष्कम्** उरोभूषणम् ॥ ( ११ ) **अतिलक्ष्यैः**[10] लक्ष्यादचलद्भिः ॥

1 Ed. पुरातनं । 2 Ed. वेत्थ । 3 Ed. बहुधा प्रधाविता । 4 Ms. आधेथाः । 5 Ms. तस्मिन् । 6 Lacuna in Ms. 7 Arj reads अंशभूतः । 8 Ed. मा समास्थाः । 9 Ed. सुसंहितः । 10 Ed. अभिलक्ष्यैः ।

## १२६

( ६ ) **असताम्** अशिष्टानाम् । **अरतिनाशनं** प्रीतिकरम् ॥ ( २० ) **उत्क्रम्य** **लङ्घ**-यित्वा ॥ ( २२ ) **बद्ध्वा त्वां दास्यन्ति** इति कृष्णस्य बन्धनसंकेतं स्मारयति ॥

## १२७

( २२ ) **दीर्घमन्तरं** दीर्घकालम् ॥ ( २५ ) **महत्** महत्पदम् ॥ ( २६ ) **भीमानि**[1] भयानकानि ॥ ( २८ ) **देशरूपेण** दिश्यते अनेनेति **देशः** [ शास्त्रं ][2] तेन रूप्यते विधीयते इति **देशरूपः** इन्द्रियजयः । अथवा योगक्षेमौ, पुरुषगुणो वा ॥ ( २९ ) **विकारिषु** विरुद्धकारिषु ॥ ( ३० ) **क्षुद्राख्येण**[3] क्षुद्रसंज्ञेन । शरीरमेव [ क्षुद्राख्यजा ]लस्थानीयम्[2] ॥ ( ३१ ) **याभ्यां** कामक्रोधाभ्याम् ॥ [ Fol. 114a ] **स्वर्यातुः** स्वर्गन्तुः **स्वर्गस्य मुखमपिदधुः** छादितवन्तः । **देवाः** इन्द्रियाणि । **वर्धितौ कामक्रोधौ बिभ्रतः**[4] **अपिदधुः** इत्यन्वयः ॥ (३२) **अभिजायते** अभितिष्ठति ॥ ( ४० ) **अंशो** भागः ॥ ( ४६ ) **निकारः** तिरस्कारः **त्रयोदश समाः कृतः** । अ[लम् अत्यर्थम् एकेन अह्ना ][2] **शमयैनम्** इत्यन्वयः । **समेधितं** संवर्धितम् ॥ ( ४९ ) **त्वत्कृते पाण्डवकृते** ॥ ( ५२ ) **उद्वीक्षितुं** क्रोधादूर्ध्वमीक्षितुम् ॥

## १२८

..................( १४ ) [ **न चा**]**वाप्यं** न च प्राप्यम् । [ अर्धं राज्यं दा ][2]-तव्यमिति ॥ ( १५ ) **मन्युः** शोकः ॥ ( १९ ) **प्रसह्य** हठेन **अभिभूय** इत्यन्वयः ॥...... .........................................॥ ( ४३ ) **निर्मोचने** सुरनगरे ॥

## १२९

( ४ )**अर्चिःसु**[5] ज्वालासु ॥ ( १२ ) **आत्मानं** रूपम् ॥ ( २१ ) **ल**[**घुना** ]...... ...... ......................................॥ [ Fol. 114b ] ( २२ ) **वरूथिना** गुप्तिमता ॥ ( २५ ) **यावद्बलं** नैते मामनुवर्तन्ते इत्यन्वयः ॥

## १३०

( ६ ) **श्रोत्रि**[**यस्य** ].......................................**बाहुः** समीपात् ॥ ( १७ ) **अत्यर्थम्**[6] अक्षयि ॥ ( २० ) **वैक्लव्यं** परदुःखैर्विक्लवता ॥..................... [ संभ ]वात् ॥ ( २१ ) **आशीः** आशंसनम्...भ इति यावत् ॥ ( २३ ) **स्वाहा** दैव्यम्, **स्वधा** पैत्र्यम् । ये.................. ॥ ( २५ ) [ **अ**]**जायथा** जातोऽसि । **ते यूयं** विद्यां विदन्ति अधीयते वा **वैद्याः स्थ** भवथ ।............( २७ ) [ **सूनृतया** ][7] प्रियया सत्यया च [ वाचा ][7] । [ **प्रति**[7]]**गृह्णीयाद्** आवर्जयेत् ॥ ( २९ ) **क्षतं** दस्युकृतव्याघातः ॥

---

1 Ed. हीमानि । 2 So Arj. for the lacuna. 3 Ed. क्षुद्राक्षेण । 4 Ed. बिभ्यतः । 5 Ed. अर्चिषः । 6 Ed अत्यन्तं । 7 So Arj. for part of the lacuna.

## १३१

( ४ ) **अनन्दनो** दुःखदः ॥ ( ५ ) **अजात** अनुत्पन्नसमत्वात् ॥ उपसात्वीयं (?)[1] षष्ठोऽङ्गुलिरिव । **क्लीब**[ Fol. 115a ]**त्वं** तस्य **साधनः** ॥ ( ६ ) **कल्याणाय धुरं वह** अकल्याणावहाः (?)[2] । अथवा **कल्याणाय** श्रेयसे **धुरं** भारं **वह** । **एनम्** आत्मानं [ मा ][3] **बीभरः** पोषय । **प्र**[**तिसंह** ]**र**[4] प्रतिकूलानाच्छादय ॥ ( ७ ) **मा शेष्व** मा स्वपिहि । **निर्मानो** निरहंकारः ॥ ( ९ ) भक्ष्यमाणस्त्वम् **अरेर्द्रंष्ट्रामप्यारुजन्** व्यथयन् **आश्वेव निधनं व्रज** ॥ ( १० ) **परिक्रमन्**[5] भ्रमन् । **तुष्णा वा व्योम्नि वापरिशङ्कितः** अज्ञातः ॥ ( ११ ) **प्रेतवत्** मृतवत् ॥ ( १२ ) **विश्रूयस्व** विख्यातो भव । मध्यमाधमतिर्यक्त्वां विहाय **ऊर्जितस्तिष्ठ** ॥ ( १३ ) **अलातं तिन्दुकस्य** यथा स्फुलिङ्गैः सशब्दैर्दिशो व्याप्य ज्वलति तथा त्वमपि प्रत्ययैः[6] **विज्वल** । **काक**[**रङ्खाः** ] काकरम् अग्न्यागारं मा खा मा खादीः । दीरित्यस्य छान्दसो लोपः । आत्मानं प्रतापागारं मा खादीरिति यावत् । अथवा काक[वद् र]-[Fol. 115b] ङ्खति करतालिकामात्रेण पलायत इति **काकरङ्खाः** । **जिजीविषुः** जीवनार्थी ॥ ( १४ ) **राज्ञः कस्यचिद्गेहे जनिः** उत्पत्तिः **मा ह स्म** भूयात् । **खरीमृदुः** गर्दभीवद् वाचा कर्कशा क्रियया मृदुः । अथवा **कस्यचिद्राज्ञो जनिः** उत्पत्तिः **खरी** खरैव केवला **मृदुः** मृदुरेव केवला मा ह स्म भूयात् । खरसाध्ये खरो मृदुसाध्ये मृदुरिति यावत् ॥ **मानुषकं**[7] मनुष्यजात्युचितम् । **श्रित्वा**[8] सेवित्वा । **यावदुत्तमं** सकलमुत्तमम् ॥ (१५) **आनन्तर्यम्** अनन्तरकार्यम् । **न धनायते** न धनवदाचरति, तृष्णां न करोतीत्यर्थः ॥ ( १६ ) [ **तत्** ][9] तस्माद् **भावयस्व**[10] उत्पादयस्व । **ध्रुवां** मरणलक्षणाम् ॥ ( १८ ) **निमज्जता** अपि **जङ्घायां प्रपतिष्यता** अपि **शत्रुर्ग्राह्यः** । **उद्यम्य** उद्योगं कृत्वा । **धरं** भारम् ॥ **आजानेया** जात्यश्वाः तेषां **कृतं** युद्धेऽनवसादम् ॥ [ Fol. 116a ] ( २० ) **राशिवर्धनं** संख्यया ॥ ( २१ ) **उच्चारो** विष्ठा ॥ ( २३ ) **आल्मीं** मौर्वीम् । जडग्रहमिति यावत । **कापालीं** भिक्षाम् ॥ ( २४–२५ ) **यमेनममित्रा अभिनन्देयुः** इत्यादिवि[शेषणविशिष्टं **ब**]**न्धुमासाद्य**[11] **बान्धवो न सुखमेधते** इत्यन्वयः । **अहोलाभकरं** स्वल्पेऽपि लाभे आश्चर्यं कुर्वाणम् ॥ ( २६ ) **अवृत्त्या** जीवनाभावेन । **विपत्स्यामो** विनङ्क्ष्यामः ॥ ( २७ ) **अकर्मकारिणं**[12] कुत्सितक्रियम् । **कुलम्** एव वंश इव **वंशो** बह्वङ्कुरत्वात्, पुनरुक्तवदाभासोऽलंकारः । **पुत्रप्रवादेन** पुत्रनाम्ना ॥ ( ३४ ) **दिष्टभावं** मरणम् । **विघसे** भुक्तशिष्टे ॥ ( ३५ ) **प्रियं** स्त्र्यादि, **सुखं** स्रक्चन्दनादिभवम् ॥ ( ३७ ) **किमद्यकानां** किमद्य नो भावीति दैवपरायणम् ॥

## १३२

( २ ) **स्तेनः** पौ[रुषचो]रः ॥ ( ५ ) **अनुदुष्येयुः** पश्चाद्दुष्येयुः ( ८ ) **अयं** सिन्धुराजः ॥ ( १० ) **अर्थाभिनिवृत्तौ** सिद्धौ । [ **परे** ] अन्येऽनुयायिनोऽपि **आप्यायिनो**[13] भवन्ति । **तस्य**

---

1 उपसान्त्वीयं ? Arj. उपमापीयं । 2 Arj. reads स्वकल्याणाय वह । 3 The word is missing in Ms. 4 Ed. प्रतिसंस्तभ । 5 Ed. विपरिक्रमन् । 6 Arj प्रतापैः । 7 Ed मानुष्यकं । 8 Ed. सृत्वा । 9 Missing in Ms. 10 Ed. उद्भावयस्व । 11 So Arj. for the lacuna. 12 Ed. अवर्णकारिणं । 13 Ed. आप्यायिताः ।

तद्भाग्य.....॥ [ Fol. 116b ] ( ११ ) **समृद्धिरसमृद्धिर्वा** प्रथमं **मम** संबन्धिनीति **विद्वान् युद्धमना भव** । **प्रत्यवाहरः**[1] पलायनपरो मा भूः ॥ ( १३ ) **पर्यायमरणं** नामा[न्तरेण ][2] मरणम् ॥ ( १९ ) **नेति** ब्रूयादिति शेषः ( २० ) **न श्रोतारः**[3] न पराज्ञाश्रोतारः ॥ ( २२ ) **सह्याः** सहनीयाः ॥ ( २३ ) **निर्विण्णात्मा** उपेक्षितशरीरः । **हृत**[**मनाः** ][2] शोकेन **विश्रुतिं** ख्यातिम् ॥ ( २४ ) **ग्रहं** सोमपानपात्रम् । प्रग्रहामिति पाठे प्रग्रहं मानम् ॥ ( २८ ) **उग्र-विभ्रंश** मरणम् । **प्रलब्धस्य** जितकाशिनः । **शेषम्** अवसानम् ॥ ( २९ ) **रुद्धं** ग्रस्तम् । **एकायने** एकमार्गे **पत** मारणं मरणं वा कुरु ॥ ( ३२ ) **ह्रष्य**[4] **सौवीरकन्याभिः** सौवीरराज्यं प्राप्नुहीति यावत् । **श्लाघ्यः** स्वजनैरिति शेषः ॥ ( ३३ ) **विकुर्वीत** प्रकृतिं त्यजेत् । **वोढव्ये** वहनीये **धुरि** विषये **अनडुद्वद्**[5] दुष्टबलीवर्दवत् ॥ ( ३७ ) **आजातः** कुलीनः ॥ **परीयात्** परिभ्रमेत् ॥ ( ४० ) **दुष्कृतः** दुष्कृत[कारिणः ]

## १३३

[ Fol. 117a ] ( १ ) **कृष्णायसस्य** लोहस्य । **संहत्य** संघातं कृत्वा ॥ ( २ ) **एकजम्** एकमेव जातम् ॥ ( ६ ) **निःसामर्थ्यम्** अकिंचित्करम् । **हेतुः** प्रत्युपकारस्तच्छून्यम् ॥ ( ७ ) **अविद्या** विष्णुमाया । **संमोहितम्**[6] अकार्यप्रवर्तितम् ॥ ( ८ ) **सद्** धर्मार्थसंबन्धि **वृत्तम्** ॥ ( ८ ) **पुत्रेण नप्त्रा** च ॥ ( १५ ) **प्राज्ञः** प्रकृष्टोऽज्ञः । **अप्रियं** दुःखं कर्मरूपम्, दुःखं कर्मेत्यनुभवो लोक इति न्यायात् । **यस्य प्रियं** सुखं **स्वल्पं तस्य** तत्साधनीभूतं कर्मापि **ध्रुवं** स्वल्पमेव ॥ ( १६ ) **अभावं** मरणम् ॥ ( १८ ) **नन्दी** तुष्टिः । **चोद्यं** चित्रं [ **चोद**]-**यसि**[7] कारुण्यप्रार्थनया ॥ ( १९ ) **कृच्छ्रभाविनं**[8] दुःखसाध्यम् ॥ ( २० ) **भाव** आस्था ॥ (२३) **अनित्यता फलं**[9] **नित्यं** सर्वदा इत्यन्वयः ॥ (२४) **भवन्ति** प्राप्नुवन्ति न...... प्राप्नुवन्ति वा इत्यन्वयः । **ये न कुर्वन्ति** ते न प्राप्नुवन्तीति निश्चयः ॥ ( २५ ) **ऐकगुण्यम्** असंदेहः । **द्वैगुण्यं** संशयः ॥ ( २६ ) **वृत्तसमृद्धी**[10] व्यापार[ तत्फले ][11] [Fol 117b] **नुदेत्** त्यजेत् । **यस्य प्रागेव अनुष्ठानाद् विदिता अर्थानामनित्यता** इति विरागकारणोपन्यासः । **प्रतिकूले** निश्चयविरोधिनी ॥ (२७) **उत्थातव्यं जागर्तव्यं**[12] उपाये तदन्तराये । **योक्तव्यं** संनद्धव्यम् । **भविष्यतीत्येव** विरागादन्य एवायं मार्ग इति दर्शयति । **ईश्व**[**रैः** देवैः ][11] ॥ (२९) **निदर्शनानि** दृष्टान्तान् । **उपायान्** सामादीन् । **उद्धर्षणानि** तुष्टिकारणानि । **अनुदर्शितरूपोऽसि** शुभैर्लक्षणैरिति शेषः ॥ ( ३० ) **युक्तः** अरहितः । **उपधारय** समीपे स्थापय ॥ ( ३१ ) **गणान्** सङ्घीभूतान् **भेत्स्यसे** ऐकमत्यान्निवर्तयिष्यसि ॥ ( ३२ ) **अग्रप्रदायी** प्रथमदाता । **कल्योत्थायी** प्रातः प्रबुद्धः । **पुरो धास्यन्ति** अग्रे करिष्यन्ति ॥ ( ३४ ) **निर्वादैः** आक्षेपवचनैः **निर्वदेत्** कदर्थयेत् । **अन्ततः** पौरुषावसाने । **तद्** ईप्सितम् ॥ ( ३५ ) **निर्वादात्** शत्रुकदर्थनात् । **आस्पद** [स्थानम्][13] ।[ Fol 118a ] तेन वैरं कुर्वाणं तद्वैरिणस्तदुदासीनाश्च

1 Ed. प्रत्युपाहरः । 2 Lacuna in Ms. 3 Ed. नाश्रितारः । 4 Ed. उष्य । 5 Ed. अनडुवत् । 6 Ed. reads differently. 7 Lacuna in Ms. 8 Ed. कृत्स्नं भाविनं । 9 Ed. फले । 10 Ed. वृद्धिसमृद्धी । 11 So Arj. for the lacuna. 12 Ed. जागृतव्यं । 13 So Arj. for the lacuna.

भजन्ते ॥ (३६) **अस्मिन्** धनवति । **तादृशं** धनहीनम् ॥ (३७) **संभाव्यमेव** संदिग्धमेव । अथवा दैवादागतम् ॥

## १३४

(१) **द्[रो भ]यम्**[1] । **दीर्णो** भीतः ॥ (४) **प्रतीतान्** मृतान् ॥ (५) **ईयुषः** प्राप्तवन्तः । **ये राष्ट्रं** पालयन्ति **ते पूजिताः सुहृदो मता** इत्यन्वयः । **मा दीदरो** मा दारय ॥ (९) **[नैक]शता**[1] अनन्ताः । **शतार्हा** बहुवेतनाः ॥ (१०) **उज्जिहत** उद्गच्छतः ॥ (१२) **उद्के धूः** भारो दुर्वहनीयोऽपि मया धर्तव्यः । अनुकूले **प्रवणे सर्तव्यम्** । [शमे][2] निवृत्तिः कर्तव्येति अशक्यमपि शक्ष्यामि त्वयि नेऽयां समुपादिशन्त्याम् । अशक्यमप्यनुष्ठातव्यम् ॥ (१३) **प्रतिवदन्** प्रतिकूलं [वदन्][2] । **तुष्णीम्** अवदन् ॥ (१४) **बान्धवात्** त्वत्तः ॥ (१८) **पुंसवनं** पुत्रप्रदम् । **वीराजननं** वीरजनकम् ॥ (२०) **धाष्टर्यं**[3] प्रागल्भ्यम् ॥

विदुरानुशासनं समाप्तम् ॥

## १३५

(३) [**उद्वर्तयि**][Fol. 118b]**ष्यति** संहरिष्यति ॥ (४) **ग्रामजन्ये** राजसमूहसंग्रामे ॥ (९) **नित्योद्युक्तः** स्वभावशिक्षितः । **समासज्य**[4] वैरं संयोज्य ॥ (२२) **अरिष्टम्** अविघ्नम्

## १३६

(४) **सिता** [बद्धाः][5] ॥ (२१) [निवे]शने[5] गृहे ॥ (२३) **दीप्तां** सूर्याधिष्ठिताम् ॥ (२४) **व्यायामो** युद्धम् ॥ (२६) **शुष्मिणः** तेजस्विनः । **अपसव्यं** विपरीतम् ॥

## १३७

(९) **अनुप्रिये** अनुकूले ॥ (११) **उष्णगे** वर्षासु ॥ (१२) **स्रजं** [**त्यक्तामिव**][6] **यौधिष्ठिरीं श्रियं प्रावृण्वानो यथा वासो** निरायासस्तथा **अद्य** संप्रति **मन्यसे** । द्रक्ष्यसि पुनः क्लेशमित्यभिप्रायः ॥

इति भगवद्यानं [समाप्त]म् ॥

## १३८

**राजपुत्रैः परिवृतः** (१३८।१) इत्यादेः **याहि याहीति सारथिम्** (१४१।४९)

---

1 Lacuna in MS. 2 So Arj. for the lacuna. 3 Ed. reads differently. 4. Ed. समासाद्य । 5 Lacuna in Ms.; so Arj. 6 Lacuna in Ms.

इत्यन्तस्य ईश्वरेच्छाप्रेरितेन दैवेन दुर्योधनादिषु चतुर्षु अनये[न] बुद्धिस्तादृशी जनिता या बृहस्पतिसमानामुपदेशसहस्रैर्न भेदमापद्यते । कर्णस्यैकान्ते प्रमाणवद्भिर्धर्मार्थयुक्तैः...... ॥

## १३९

[ Fol. 110a ][1] ( ३८ ) समित्सदृशो बाणः[2] । **सोमकलशा** ग्रहाः । **पवित्राणि** अभिषवणानि ॥ ( ४० ) **कृपस्य च** शिष्या इत्यन्वयः ॥ ( ४१ ) **परिस्तोमा** आस्तराः ॥ ( ४२ ) **प्रस्थानिकं**[3] मन्त्रसाधारणम् ॥ ( ४३ ) **अतिरात्रे** संतते, अतिरात्रनाम्नि यज्ञे वा ॥ ( ४६ ) **पुनश्चितिः** पुनरारम्भः ॥ ( ४७ ) **सुत्यं** सुत्यापाटाः ॥ ( ५० ) **प्रस्नुषा** नप्तृवधूः । **नाथ** आश्रयणीयः ॥ ( ५२ ) **वृथामृत्युः** युद्धं विना मरणम् । **त्वत्कृते** तव यज्ञपुरुषस्य प्रीतये ॥ ( ५५ ) **कीर्तिभवः शब्दः** साधुकारः ॥

## १४०

( १ ) **प्रहसन्** उपहासं कुर्वन् ॥ (२) **अपि त्वा न तपेद्** इति शिरश्चाले तपेदेवेत्यर्थः । **उपपादना** दानम् ॥ ( ४ ) **भौवनेन** विश्वसृजा । **भयावहानि** भयंकराणि । **भयानकानि** रौद्ररूपाणि ॥ ( ७ ) **न तदा भविता त्रेता** इत्यादेर्युगक्षयो मृत्युस्तात्पर्यार्थः ॥ ( १६ ) **सौम्यः** अचण्डः ॥

## १४१

( ७ ) **प्राजापत्यं** रोहिणी ॥ ( ८ ) **मैत्रमनुराधाम्** एव **संशमयन्** ॥ ( ९ ) **ग्रहो** राहुः भौमो वा ॥ ( १० ) **व्यावृत्तं** निवृत्तम् । **सकम्पनाः** सवायवः स[भूमि]कम्पा[4] वा ॥ ( १६ ) **अपसव्या** वामाद्दक्षिणगाः ॥ ( १८ ) **बडाः** काकाः ॥ ( २० ) **उदपानानि**[5] कूपाः ॥ ( २१ ) **वप्रं** प्राकारदार्ढ्यार्थमर्पिता मृत् । **परिघं**[6] दण्डः ॥ ( २२ ) **एका** एकाकिनी [ Fol. 110b ] **सृक्** शृगाली ॥ (२७) **सहस्रपादम्** अनल्पमेखलं सहस्रस्तम्भं वा ॥ (२८) **शस्त्रम्** ऐन्द्रं धनुः । **आमः** अपक्वम् ॥ ( २९ ) **आन्त्रम्** अन्त्रसमूहः ॥ ( ३६ ) **कण्ठत्रं** कण्ठा-[भरणम् ][4] ॥ ( ४५ ) [ **वीरक्षयं** ][4] वीरगृहम् ॥ ( ४७ ) **पीडितं** गाढं यथा भवति ॥

कर्णोपनिषद् समाप्तम् ॥

## १४२

**असिद्धानुनये कृष्णे** ( १४२।१ ) इत्यादेः **ततस्तौ जग्मतुः** ( १४४।२६ ) इत्यन्तस्य बलव[ता दै]वेन हताः कर्णादयो न केनचित्पुरुषकारेण प्रतिकर्तुं शक्यन्त इति तात्पर्यार्थः ॥

---

1 See above p. 59. 2 This, according to Arj's reproduction, is the explanation of उपबृंहण । 3 Ed. प्रातिप्रास्थानिकं । 4 So Arj. for the lacuna. 5 Ed. उदपानाश्च । 6 Ed. परिखं ।

( ५ ) **मत्तो** निर्मर्यादः । **निरामयो**[1] बाधारहितः ॥ ( ७ ) हे **धर्मिष्ठ**[2] '**नः**[3] अस्माकं पाण्डवानां **राज्यं हृतम्** । **तेषां** धार्तराष्ट्राणाम् **अधर्मेण** द्यूतलक्षणेन । तेषामधर्मे धर्मशब्द-प्रयोगो विपरीतलक्षणया ॥ ( ८ ) **संज्वरेत्** संतापं कुर्यात् ॥ ( १० ) **अर्थः** पुरुषार्थः ॥ ( ११ ) **वर्त्स्यते** वर्तिष्यते ॥ ( १५ ) **कामवान्** इच्छावान् ॥ ( २७ ) **उपाध्ययनं** जपः ॥ ( २९ ) **उत्तरवाससि** उत्तरवस्त्रच्छायायाम् ॥ ( ३० ) **आपृष्ठतापान्**[4] पृष्ठं तापयन्तम् । **उत्स्मयः**[5]...उद्गतविस्मयो **वृषः**[6] श्रेष्ठः ॥

## १४३

( ७ ) एकं स्नेहमेव पश्यतीति **एकदर्शिनी** ॥ ( १२ ) **मा शब्दं**[7] शृणु इति शेषः ॥

## १४४

( १ ) **निश्चरिताः**[8] निःसृताः । **अत्ययो** विनाशः ॥

## १५१

[ Fol. 113a ][9]...र्मकाम् ॥ ( १३ ) **यान्यभाषन्त तेनोक्तेन** । भावे क्त-प्रत्ययः ॥ ( १५ ) **अत्यर्थं परित्यागः** सर्वपरित्यागः । पञ्चग्रामप्रार्थना परिवर्तनहेतुत्वेन किंतु तदत्यागेना-न्यायिता लोकप्रसिद्धा दुर्योधने स्यादिति ॥ ( १७ ) **योगः** संहननम् ॥ ( १८ ) **किलकिला** कोलाहलं **भूतं** प्राप्तम् ॥ ( १९ ) **निष्टनन्** क्रन्दन् ॥ ( २० ) **यदर्थं** यन्निवृत्तये । **प्रयत्नतः**[10] प्रयत्ने वनवासादि[रूपे ] व्यर्थे[11] सति ॥ ( २१ ) **यस्मिन्** संधौ । **प्रयत्नतः** प्रयत्ने सत्येव । यदर्थं यतितं तन्न लब्धम्, यदर्थं स्वप्नेऽपि न यतितं तत्प्राप्तमित्यर्थः ॥ ( २२ ) **अवध्यैः** सह इत्यन्वयः ॥ ( २५ ) **तौ** कुन्तीविदुरौ **न च अधर्मं वक्ष्यतः** । **अयुद्धतो**[12] युद्धाभावादेव, युद्धस्यावश्यंभावित्वात् ॥

## १५२

( २ ) **फल्गु** जघन्यम् ॥ ( ३ ) **अनुकर्षौ**[13] धारण्यौ, याभ्यां रथयुगं ध्रियते । **सतूणीराः** सतूणाः । **वरूथो** रथस्य पश्चाद्भित्तिः, रथगुप्तिरिति प्रसिद्धः । **तोमरा** हस्तबाणाः । **उपासङ्गो** [ Fol. 113b ] रथे कीलिततूणम् । **पावकः**[14] अग्नितैलम् । **तोमरो** बाणः ॥ ( ५ )

---

1 Ed. reads differently. 2 Ed. धर्मिष्ठं । 3 Ed. वै । 4 Ed. °आपृष्ठ-तापात् । 5 Ms. उत्सर्गः wrongly. 6 This is the reading of B5 only ! 7 Ed. शब्दः । 8 Ed. निश्चरितं । 9 The folios are numbered over again consecutively but wrongly from 113a; see above p. 59. 10 Ms. –त्ययं ततः ( corrupt ). 11 Ms. व्यंग्ये । 12 Ed. अयुध्यतः । 13 Ed. सानुकर्षः । 14 Apparently Devabodha reads सपावकाः for सपोथिकाः ।

**कचग्रहः** आकर्षकोऽङ्कुशः । **विक्षेपः** प्रेरणशस्त्रम्, येन दूरादेव प्रेर्यते । **तैलगुडवालुकाः** तप्ता दाहाय । **साशीविषघटाः** सर्पपूर्णकुम्भाः । **सर्जरसपांसुः** रालधूलिः ॥ ( ६ ) **घण्टाफलकं** घण्टासहितं चर्म ॥ (५४३*) **अयोगुडो** लोहबिल्वम् । **सारो** हस्तक्षेप्यः पाषाणः । **भिण्डिपालो** गोफलकः[1] । **मधूच्छिष्टं** मदनकम् । **दण्डकण्टकं** कण्टकी दण्डः । **सीरं** हलम् । **विषतोमरं** विषदिग्धं काण्डम् । **सूर्पपिटके** उपकरणे । **सदात्राङ्कुशं** रोधो रथपार्श्वद्वयं येषाम् । **क्रकचं** करपत्रम् ॥ (६) **वासी** काष्ठतक्षणशस्त्रम् । **वृक्षादनं** बृहद्दात्रम् । **द्वीपी** चित्रकः[2] ॥ (७) **वस्तिः** नीडी । **शृङ्गं** महिषादेः । **प्रासः** कुन्तः ॥ ( ८ ) **चित्रानीकाः** चित्रसैन्यानि ॥ ( ९ ) **अरिघ्ना** आयुधसमर्पकाः । **कक्षा**[3] वरत्राः॥ (५४६*) **निर्यूहः** समूहः । **पट्टिशं** काष्ठफलकम्॥ [ Fol. 114a ] (१०) [**प्राप्तयो**][4] रथकर्मकाराः **वाहका**[5] रथहयानाम् । **शरासनं** धनुः ॥ (११) एकपक्षमुक्त्वा पक्षान्तरमाह—**धुर्ययोः** इति । **धुर्ययोः** मुख्यहययोः **एकः** प्रेरकः । **पार्ष्णिसारथी** पुनर्धुर्यप्रेरकस्य पार्श्वस्थितौ हयप्रेरकौ । **तौ द्वौ** ॥ (१२) **दुरादेयानि** दुर्ग्राह्याणि ॥ ( १६ ) **सादिनः** अश्ववाराः ॥ ( १८ ) **विकारा** भङ्गयः ॥ ( १९ ) **रथस्य** इत्यादिना दशगुणवृध्या एकः पक्ष उक्तः ॥ ( २० ) **रथस्य नागा** इति विकल्पान्तरम् । **भिन्नसंधानकारिणः** भिन्नानां भग्नानां संधानं घटना ॥ ( २१ ) नागाः ५० रथाः ५० सेना । सेनैव दशगुणा पृतना । पृतनैव दशगुणा वाहिनी ॥ ( २२ ) वाहिन्यादिपर्याया अक्षौहिन्या अपीत्याह—**वाहिनी** इति । (२४–२५) पञ्चाधिकाः पञ्चाशन्नराः पत्तिः सेनामुखं च । पत्तयः ३ गुल्मः । गुल्माः १० गणः । **गणाः अयुतशः** अयुतानि अभवन् ॥ ( ३० ) **प्रतिवेलं** प्रतिक्षणम् । **संज्ञा** गुप्तसंकेतान् ।

## १५३

( २ ) **पुटं** संघातः [पिपी]लिकाकृतं[6] पत्रगृहं वा ॥ ( ११ ) **असंहार्यः** अभेद्यः । तत्र हेतुः—**स्थित** इति ॥ ( १४ ) **अनाधृष्या** अधर्षणीयाः ॥ ( १५ ) **पावकिः** स्कन्दः ॥ ( १९ ) **न विवृतो** न प्रकटो लज्जा[वशात्][6] ॥ [ Fol. 114b ] ( २१ ) **प्रयोगेन** अस्त्राणाम् ॥ (२७) **पुष्करं**[7] तूर्यमुखम् ॥ ( ३० ) **दीप्तस्वराः** सज्वालमुखाः, अथवा असौम्यस्वराः ॥ ( ३२ ) **वाचयित्वा** स्वस्तीति शेषः ॥ ( ३५ ) **सधरे** मृष्टजले ॥

## १५४.

( ३ ) **औदार्यं** महत्त्वम् ॥ ( ४ ) [**प्र**]**तिभये**[6] शत्रुभयंकरे ॥ **आभीले** द्वाभ्यां घने अथवा द्वयोः शोकावहे ॥ ( ६ ) आपद्धर्मोऽयं यद्[8]...तेनापि सह युद्धम् ॥ ( २४ ) **दिष्टं** भाग्यम् । **ध्रुवम्** अनपायि ॥ (२७) **उपह्वरे** एकान्ते ॥ ( ३१ ) **उदीक्षितुं** जीवलोकं द्रष्टुम् ॥ ( ३४ ) **निवर्त्य** अनुयान्तम् ॥

---

1 Ms. गोफणकः । 2 Arj. चित्रव्याघ्रः ! 3 Ed. कक्ष्या । 4 Ed. संहृष्टं । 5 Ed. वाहनाः । 6 Lacuna in Ms. 7 Ed. पुष्करान् । 8 Ms. is corrupt and reads यद्बुड्ढं ; Arj. यद्बलं ।

## १५५

( ३ ) **चतुष्पादं** दृढतरं चित्रं दुश्चरम् ॥ ( १४ ) **योगानां** समाधीनाम् । **व्यंसितो** जितः ॥ (५५२*) **भागं** सेनांशम् । ( ३१ ) **द्रोणं व्यपदिशन्** गुरुतया कथयन् । **शिल्पे**[1] शस्त्रशिक्षानैपुण्ये ॥ ( ३८ ) **समितिः** सभा ॥

## १५६

( ३ ) **अनवशेषेण**[2] निःशेषेण वद[3] । ( ९ ) **गन्तुं** गमयितुम्, अन्तर्भूतण्यर्थत्वात् । ( ११ ) **निकाराः** परिभवाः । **त्वत्प्रतीक्षया** त्वयि गौरवेण ॥ ( १२ ) **वैशसं** वधम् । **वृत्तं** भाविनि भूतोपचारात् ॥ ( १५ ) **विकृष्यते** विभज्यते ॥

## १५७

( १० ) **अकर्मणा** वाङ्मात्रेण ॥ ( १६ ) **तूबरकं** श्मश्रुशून्यम्, कः कुत्सायाम् ॥ ( १७ ) **शप्तं** शपथः कृतः ॥ ( १८ ) **लोहाभिहारो** लोहेषु मन्त्रेण देवताह्वानम्, **राज्ञां** नीराजनविधिर्वा । **अकर्दमम्** इति [ Fol. 115a ] भूमेर्युद्धयोग्यतामाह । **श्वः** प्रभाते ॥

## १५८

( ८ ) **धिष्ण्याद्** गेहात् ॥ ( १४ ) **वेद्योः** ब्राह्मणक्षत्रयोः **अन्तरं** मध्ये वर्तमानम् ॥ ( १८ ) **अभिध्यातो** हन्तुं चिन्तितः । **दारु[णेन** उत्पा]तेन[4] शस्त्रेण वा । **पद्मा भूमिमुपस्पृशन्** मर्त्यः ॥ ( १९ ) **दर्दुरो** मण्डूकः । ( २१ ) **नागकुलं**[5] हस्तिसङ्घः ॥ ( २४ ) **सर्वे दुर्गताः** कृतार्था भवेयुः ॥ ( २६ ) **पर्यायधर्मः** राज्ञः पुत्र इति क्रमधर्मः । **धातैव मनसा कुरुते** नेतरो जनः ॥ ( ३० ) **अमानुष्यम्** अपुरुषकारः ॥ ( ३१ ) **षण्ढतिलान्** वन्ध्यतिलान् । तत्र दृष्टान्तः—**धृता हि** इति । **वेणी** नपुंसकचूडा ॥ ( ३२ ) **श्रान्तं** श्रमं प्राप्तः ॥ ( ३३ ) **संयुगे यः पलायते** क्षत्रियः, तत्र **क्षत्रिया एवमेव** यथा मया भवत्सु तथा **दण्डमादधुः** । पाण्डवेष्वाहितं दण्डमाह–**श्रेण्याम्** इत्यादि । **श्रेण्यां** सभायाम् । युधिष्ठिरो हि कङ्करूपेण सभायामधिकारी कृतः । तत्र च ब्राह्मणेषु प्रथमाधिकार [ Fol. 115b ] इति तैरेव कुपितैः पात्येतेति दण्डः । **कक्ष्यां** मल्लव्यापारे । भीमो वल्लवरूपेण मल्लैरेव बाहुभङ्गं नीयेतेति दण्डः । **वेण्याम्** अपुरुषचिह्नेन । [ बृहन्न]डारूपेण[6] अर्जुनः स च पुरुषत्वमेव त्याजित इति दण्डः ॥ ( ३५ ) **माया** अभूतदर्शिनी कापि विद्या विश्वरूपादिदर्शनलक्षणा । **इन्द्रजालं** मन्त्रौषधादिभिश्चक्षुरादिप्रतिबन्धेनान्यथाप्रतिभानम् । **कुहका** हस्तलाघवेनान्यथादर्शनम् । **बिभीषर्णा** इति त्रितयविशेषणम् । **प्रतिगर्जनं**[7] विकत्थनम् ॥ ( ३८ ) **विविंशतिः** एव **समाकुलः**[8] कल्लोलो

---

1 Ed. शिष्यः । 2 Ed. अनवशेषतः । 3 Ms. वदतः । 4 So Arj. for the lacuna. 5 Ed. नागबलस्य । 6 Lacuna in Ms. 7 Ed. प्रतिगर्जनाः । 8 Ed. झषाकुलं ।

यत्र । **समुच्चलो**[1] वृद्धिः ॥ ( ३९ ) **ओघः** प्रवाहः । **पुरुमित्रो** दुर्योधनभ्राता स एव **गाढम्**[2] अतिशयो यत्र । **दुर्धर्षणो** दुर्योधनभ्राता स एव **उदं** उदकं यत्र । **प्रपातः** तटः ॥ ( ४१ ) **अशुचेः** पापरतस्य । **प्रशास्तुं बुभूषता** भवितुमिच्छता । **स्वर्गे** यथा **अतपस्विना** इत्यन्वयः ॥

## १५९

[ Fol. 116a ] ( ३ ) **आसनेषु** चलिता इव ॥ ( ५ ) **आर्तम्** उलूकवचनेन पीडितम् **उत्स्मयन्** ॥ ( ७ ) **अदृश्येथा**[3] अन्तर्हितो मा भूः ॥ ( ९ ) **जघन्यकालं** पश्चात्कालम् ॥ ( १३ ) **स[मीक्षते ]**[4] विलम्बते, न गणयति वा यत्प्रभाषते ह्येवेत्यभिप्रायः ॥

## १६०

( ३ ) **स्ववीर्यं** मनोबलं शरीरबलम् । **समाह्वानं** शत्रुशक्तेरधिक्षेपः । **अभीतः** कवला-दपीति शेषः । पूरयति शक्तिं पुष्णातीति **पुरुषः** । स्ववीर्यं परवीर्याक्षिपो भयाभावश्च शक्तेः पूरणम् । स्वयमशक्तस्य पराक्षेपः पुरुषाधमत्वं गमयति ॥ ( ४ ) **क्षत्रबन्धुः** क्षत्राधमः ॥ ( ६ ) **सर्वराज्ञां** मध्ये **मरणाय दीक्षयित्वा विकत्थसे** इत्यन्वयः ॥ ( ८ ) **मिषतां** पश्यताम् ॥ ( १० ) तस्म...[ आ]ह **सत्यसंधो** भीष्मः ॥ ( ११ ) **द्रोणमृते** द्रोणं विना **अपि**[5] । **ततोऽधि**[6] तस्माद्वचनादुपरि ॥ ( १३ ) **द्वीपं** मज्जतामाधारम् ॥ ( १५ ) **ह्रस्वदर्शनः** अल्प-बुद्धिः ॥ ( १६ ) **अध[र्मज्ञः ]**[7] [ Fol. 116b ] अधर्मं धर्मतया जानातीति ॥ ( १७ ) **अभिमानस्य** उन्नतोऽस्मीति भावस्य । **दर्पस्य** पराभिभवसमर्थोऽस्मीति भावस्य । **पारुष्यं** वा...यायाम्[8] । **अवलेपस्य** अवज्ञाया महत्स्विति शेषः । **आत्मसंभावनस्य** अहं पाण्डवाञ्जे-ष्यामीत्येवंरूपस्य ॥ ( १८ ) **नृशंसतायाः** हिंसायाः । **तैक्ष्ण्य[स्य... ]** पूर्वप्रचण्डतायाः । **अतिवादस्य** मर्यादामतीत्य वचनस्य ॥ ( १९ ) **वक्रस्य** कुटिलस्य ॥ ( २८ ) **उग्रगामी** शीघ्रगा उग्री । **यात**[9] गच्छत ॥

उलूक[यानं समा]प्तम् ॥

## १६१

**उलूकस्य वचः श्रुत्वा** ( १६१।१ ) इत्यादिः **भीष्मं युक्तममन्यत** ( १९३।६६ ) इत्यन्तस्य योधसारासारविवेकेन यथायोगं विनियोगस्तात्पर्यार्थः ॥

## १६२

( ८ ) **भृतान्** मूल्येन **अभृतान्** मैत्र्या समागतान् ॥ ( ९ ) **यात्रायां** प्रयाणे **याने**

1 Ed. समुच्चालं । 2 Ed. गाधम् । 3 Ed. प्रदृश्येथाः । 4 So Arj. for the lacuna. 5 Ed. हि । 6 Ed. हि । 7 Lacuna in Ms. 8 Arj. reads for the lacuna वाचि नैष्ठुर्यम् ! 9 This Pratika is not found.

रथादौ । **लब्धस्य** देशस्य **प्रशमनम्** आश्वासनम् ॥ ( ११ ) **मानसो ज्वरो** भयम् ॥ ( १५ ) **अतिरथानां संख्याम्** इत्यनुवर्तते ॥ ( २० ) [ **कृतग्रह**][1] [ Fol. 117a ]**रणा** अभ्यस्तास्त्राः ॥ ( २२ ) **मनस्विनः** साहंकाराः ॥ ( २३ ) **कदर्थीकृत्य** क्लेशयित्वा ॥ ( २५ ) **तुभ्यं** त्वदर्थम् ॥

## १६३

( ३ ) **वंशः** सङ्घः ॥ ( ९ ) दक्षिणगोग्रहे सुशर्मा भीमेन बद्ध्वा विराटस्य चरणयोः पातित इति **कृतवैरत्वम्** ॥ ( १० ) **गङ्गां वा** इति पाठे **वा**-शब्द इवार्थः ॥ ( १२ ) भीमेन विराटनगरे तदनुजेन चार्जुनेन दिग्विजय इति भावः ॥ ( १५-१६ ) **सुकुमारौ** इति **रथसत्तमौ** इति विरुद्धालंकारः ॥ ( २० ) **परित्यज्य** परित्यागसंकल्पं कृत्वा ॥

## १६४

( २ ) **सैन्याः** समवेताः ॥ ( ४ ) **संसक्ता** अन्योन्यलग्नाः ॥ ( ६ ) **अश्रमः** आश्रमम्, ह्रस्वत्वं छान्दसम् ॥ ( ८ ) **जीवितं** प्राणाः । आयुः लिङ्गषाट्कौशिकशरीरसंयोगेनावच्छिन्नः कालः । एतेन प्राणहरे युद्धे पराङ्मुखत्वं दर्शितम् ॥ ( ११ ) **सिंहः** शूरत्वात् । **क्लीबो**[2] जीवितप्रियत्वात् । **पृष्ठं** शेषम् ॥ ( १६ ) **आचार्यकम्** आचार्यकर्म । **दीप्तं** प्रसिद्धम् । **गुण**-[ Fol. 117b ]**निर्जितं** गुणोपार्जितम् ॥ ( २० ) **कृष्णगतिः** वह्निः ॥ ( २९ ) **सततगो** वातः ॥ ( ३१ ) **व्यथा** भयम् ॥ ( ३५ ) गजाङ्कुशाकारपरिणतं नारायणास्त्रम् ॥ ( ३७ ) **पाकशासनं** [ **सखार्यं** ] **मानयन्** अर्जुनेन **संविदं** संधं कृतवान् इति संबन्धः ॥

## १६५

( ६ ) **ब्राह्मणस्य च** यस्य पुत्रः कर्णेन हतः । **करणानां** सहजकवचशरप्रभृतीनाम् ॥ ( ८ ) **घृणी** [ दया]वान्[3] । **प्रमादी** अनवधानवान् ॥ ( १३ ) **समानेषु** माना[र्थि]षु[4] । **बिभेदयिषुः** भेत्तुमिच्छन्, स्वार्थे णिच् । अर्धरथत्वादिगणनया राज्ञां वैमुख्यमापा[दयन्][5] । **गुणनिर्देशाद्** बहुगुणानामप्यल्पतया कथनात् । **अपरागं**[6] विरागम् ॥ ( १६ ) **ग्राहः** अनिर्वर्त्यं विपरीतज्ञानम् ॥ ( १८ ) **भिन्नाः** पृथक्कृताः । **मौलाः** पारंपर्यागताः । **नानासमुत्थिता** नानावस्तुकृतोद्योगाः ॥ ( २२ ) **क युद्धविमर्दः क च गतवयाः, क मन्त्रः**[7] **क च मन्दात्मा, क सुव्याहृतानि क च कालमोहितः** ॥ [ Fol. 118a ] कालमोहितो हि विपरीतं प्रलपति ॥ ( २३ ) **सदा** सर्वकालम् । **नित्यम्** अहर्निशम् ॥

## १६६

( ५ ) **संतप्तः** क्रोधेन । अथवा **तु**-शब्दोऽवधारणे, **अपि** इत्यक्षमायाम् । **निहीन** हे

1 So Arj. for the lacuna. 2 Ed. सिंहग्रीवः । 3 Lacuna in Ms. 4 Ms. मानार्थेषु । 5 Lacuna in Ms. 6 Ed. अपराधं । 7 Ed. मन्त्राः ।

नीच कुलपांसन ॥ ( ७ ) **ईदृशानां** त्वत्समानानाम् । **विशिष्टानां** विशेषवताम् ॥ ( ९ ) **विनिर्मुक्तं द्रक्ष्यामि** इति शिरश्चाले न निर्मुक्तमित्यर्थः ॥ ( २० ) **प्रादेशेन** विततांगुष्ठतर्जन्योः प्रमाणेन ॥ ( २१ ) **सिंहस्येव संहननं** शरीरं येषाम् ॥ ( २३ ) **आयुधानि** धनूंषि । **अधिज्यानि** आरोपितगुणानि । **प्रकर्षितुं** तूणादाक्रष्टुम् ॥ ( २४ ) **जवे** बाणमोक्षलाघवे । **लक्ष्यस्य हरणे वेधे**[1] भो[ज्य]मांसवेधे[2] **पांशुविकर्षणे** पांशूनां सूक्ष्माणामपि खण्डने **विशेषिता** विरुद्धं शेषं हीनभागं नीताः ॥ ( २५ ) **ते** पाण्डवाः । **ते** तव । **मास्म संगमः** युद्धे नामीलनं कृथाः ॥ ( २८ ) **लोहिताक्ष** इति महापुरुषलक्षणम् ॥ ( ३० ) **समायुक्तो** त्रिलक्षण-सर्वोपकरणपूर्वः ॥ ( ३६ ) **प्रत्युदियाम्** आगच्छन्तं प्रत्युद्गच्छेयम् ॥ ( ३८–३९ ) **मनोभिः संवेगैः**[3] क्रोधैः सह **भुजा** [ **दध्वंसिरे** ? अ] [ Fol. 118b ]वलम्बिरे[4] ॥

## १६७

( ११ ) **कारणं** दैवमनुकूलं **प्राप्य सर्व एव शूरा** भवन्ति, प्रतिकूलं प्राप्य **कातराः** च ॥ ( १२ ) **एकायनगतौ** मरणैकशरणौ । **घटितारौ**...॥ ( १३ ) [ **सं** ]**प्रति**[5] युद्धे ॥ ( १४ ) **प्रत्ययं** प्रतिज्ञाम् ।

## १६८

( २ ) **पूर्वसंस्थितिं** स्त्रीत्वप्रवादम् । **यवीयसः**[6] कनिष्ठान् । **विप्रथयन्** ख्यातान् कुर्वन् ॥ ( १५ ) **आहितं**[7] प्रसिद्धम् ।

रथातिरथसंख्याने ॥

## १७०

**किमर्थं भरतश्रेष्ठ** ( १७०।१ ) इत्यादेः **दृष्ट्वापि समरे स्थितम्** ( १९३।६५ ) इत्यन्तस्य भीष्मस्य मर्यादामनतिक्रान्तः प्रतापातिशयस्तात्पर्यार्थः ॥

( २ ) **सोमकैः** पाञ्चालैः ॥ ( ४ ) **दिष्टान्तं** मरणम् ॥ ( ८ ) **अनुकूलात्**[8] सदृशात् ॥ **इव-**शब्दो वाक्यालंकारे ॥ ( ११ ) **समावृत्तान्** सुमेतान् ॥ ( १३ ) वीर्यमेव शुल्कं मूल्यं येषाम् ॥ ( १५ ) **योगः** संहननम् । वीप्सा त्वरायाम् ॥ ( २१ ) **आयाम्** आगच्छम् ॥

## १७१

( १ ) **उपसंगृह्य** चरणाविति शेषः । **दाशेयीं** कैवर्तसुताम् ॥ ( ६ ) **रहसि** एकान्ते **पितुरविदिते** ॥ ( ८ ) **क्षमम्** उचितम् ॥

---

1 Ms. वेधा । Ed. भोज्ये । 2 Lacuna in Ms. 3 Ed. सावेगैः । 4 Lacuna in Ms. 5 Ed. संयति । 6 Ed. परं यशो । 7 Ed. आहव° । 8 Ed. अनुरूपात् ।

## १७२

( १ ) **समनुज्ञासिषम्** अनुज्ञातवान् ॥ ( १५ ) **आलभे** स्पृशामि ॥ ( २० ) **यथा ममेदं सत्यं** व्रतं तथा **सन्तः सन्तु गतयो मम** ॥

## १७३

( ७ ) **मुखं** प्रधानम् ॥ ( ११ ) शैख्यावत्यनामा । [ Fol. 119a ] **आरण्यके** उपनिषदि ॥ ( १४ ) **प्रव्राजयितुम्**[1] इति स्वार्थे णिच् ॥ ( १८ ) **दृष्टान्तः** प्रत्यक्षम्, **आगमः** शास्त्रम् । **हेतुभिः** अनुमानैः ॥

## १७४

( ५ ) **प्रव्रजितेन** प्रव्रज्यया ॥ ( १३ ) **महात्ययं**[2] महात्ययकल्पं दुःखम् ॥ ( २३ ) **समे पथि**[3] शोभने मार्गे ॥

## १७६

( २५ ) **शुक्लदती**[4] शुक्लदशना ॥ ( ३७ ) **औपयिकं** युक्तम् ॥

## १७७

( २० ) **सज्जन्ति** लगित्वा तिष्ठन्ति ।

## १७८

( २ ) **आशु** श्रुतमात्रानन्तरम् ॥ ( ६ ) **विभ्रंशिता** पातिता । **परावरात्** लोकद्वयात् ॥ ( ९ ) **नातिमनसं** क्रोधाविष्टम् ॥ ( ११ ) **भयाद्** उच्छेददृष्ट्या मनःक्षोभात् । **अनुक्रोशात्** कृपया । **लोभा**[द् अपराभ]वेच्छातः[5] । **नार्थकाम्यया** नार्थेच्छया ॥ ( १३ ) **संरम्भात्** क्रोधात् । **पर्याकुलत्वं** क्रोधानुभावः ॥ ( २४ ) **अवलिप्तस्य** अहंकारिणः ॥ ( २८ ) **यो यस्मिन्** हितभावे[न...] वा **वर्तते** स तत्र **तथा प्रवर्तयन्** तथा वर्तमानः । स्वार्थे णिच् ॥ ( २९ ) **अर्थे धर्मे वा देशकालवित्** पण्डितः । **अनर्थसंशयापन्नोऽसमर्थो** [**निःसंशयेन**][6] [ Fol. 119b ] संशयाभावेन तु **श्रेयान्** समर्थानां श्रेष्ठ इत्यर्थः ॥ ( ३० ) **संशयिते** अनर्थसंशयापन्ने । **यथान्याय्यं**[7] न्यायादनपेतं यथा । **तस्माद्** यो यथा वर्तते इत्यस्मान्न्यायात् ॥ ( ३१ ) **एवं गते** ज्ञाते ॥ ( ३४ ) **शौचं** रुधिराञ्जलिदानम् ॥ ( ३५ ) **पौराणं** पूर्वार्जितम् ॥

---

1 Ed. प्रव्राजितुं । 2 Ed. महात्ययः । 3 Dropped in Ms. 4 Ed. शोकवती । 5 So Arj. for the lacuna. 6 Lacuna in Ms. 7 Ed. यथान्यायं ।

## १७९

( १ ) **दिष्ट्या** कल्याणम् ॥ ( ३ ) **बडाः** काकाः ॥

## १८०

( ४ ) **वेदमातरो** गायत्रीसावित्रीसरस्वत्यः ॥ ( ५ ) **सव्यतिक्रमो**[1] लङ्घितक्रमः ॥ ( १२ ) **त्रिषु बाणपातेषु** शरपातत्रयपरिमिते मार्गे । **निगृह्य** स्थापयित्वा ॥ ( १४ ) **विशिष्टेन** जात्या **अधिकेन** गुणैः ॥ ( २० ) **स** रामः । **मे** मत्संबन्धिनि ॥ ( २३ ) **पदं**[2] प्रतिज्ञापदम् । **संग्रहं** संक्षेपम् ॥

## १८१

( २ ) **अपवृत्तैः** लुण्ठितैः ॥ ( १४ ) **सव्यतःकरणं** पराजयलिङ्गम् ॥ ( १५ ) **संन्यषीदम्** उपविष्टः । **कश्मलो** मोहः ॥ ( २९ ) लोम्नि वहन्तीति **लोमवाहिनः** । अथवा लोमवद् अक्षिपक्ष्मवद् वहन्तीति शीघ्रचारित्वमुक्तम् ॥ ( ३० ) **ते शरा अन्तरा** मध्ये **विष्ठिताः**[3] परस्परोरोधेन स्थिताः ॥

## १८२

( १५ ) **रक्तं** वर्णतः ॥

1 Ed. सत्यविक्रमः । 2 Ed. संपदं । 3 Ed अधिष्ठिताः ।